॥ ओ३म् ॥

# ॥ यजुर्वेदसंहिता ॥



ऋष्यादिसंवलिता ।

वैदिकयन्त्रालयस्थपण्डितैर्बहुसंहितानुसारेण
संशोधिता ।





अजमेरस्थ-

वैदिकयन्त्रालये मुद्रिता



सृष्ट्यब्दाः १९७२९४९०११.

द्वितीयावृत्तिः १००० संवत् १९६७ वि०

॥ ओ३म् ॥

# यजुर्वेदसंहितायाम्

## ॥ प्रथमोऽध्यायः ॥

परमेष्ठी प्रजापतिर्ऋषिः । १—३१ ।

देवता—सविता १, ३, १०, २०, २५, २६ यज्ञः २, ७, १४, १५, २१, —३१ विष्णुः ४, ६ अग्निः ५, ८, ११, १७—१६, २३ प्रजापतिः ६ वितारौ १२ इन्द्रः [उ], अग्निः [क], यज्ञः [र], १३ वायुः [क], सविता [र] १६ यज्ञः ग्निसवितारौ [र], २२ द्योविद्युतौ २४ ।

छन्दः—स्वराड्बृहती [क] ब्राह्म्युष्णिक् [र] १ स्वराडार्षीत्रिष्टुप् २ भुरिग्जगती नुष्टुप् ४ आर्चीत्रिष्टुप् ५ आर्चीपङ्क्तिः ६ प्राजापत्या जगती ७ अतिजगती चृत् त्रिष्टुप् ६ भुरिग्बृहती १० स्वराड्जगती ११, १४ स्वराट्त्रिष्टुप् १२, निचृदुष्णिक् [उ], विराड्गायत्री [क], भुरिगुष्णिक् [र] १३ निचृज्जगती [क], याजु- ङ्क्तिः [र] १५ विराड् गायत्री [र] ब्राह्मी त्रिष्टुप् [क] १६ ब्राह्मी पङ्क्तिः १७ ब्राह्मी णक् [उ], आर्ची त्रिष्टुप् [क], आर्ची पङ्क्तिः [र] १८ निचृद्ब्राह्मी त्रिष्टुप् १६ ड् ब्राह्मी त्रिष्टुप् २०, २५ गायत्री [क], विराट् पंङ्क्तिः [र] २१ स्वराट् त्रिष्टुप् यत्री [र] २२ बृहती २३ स्वराड् ब्राह्मी पङ्क्तिः २४ स्वराड्ब्राह्मीपङ्क्तिः [क] भुरि- ह्मीपङ्क्तिः [र] २६ ब्राह्मी त्रिष्टुप् २७ विराड् ब्राह्मी पङ्क्तिः २८ भुरिग् जगती ष्टुप् [र] २६ जगती [क], अनुष्टुप् [र] ३१ ।

स्वरः—मध्यमः [क], ऋषभः [र] १ धैवतः २, ५, ६, १२, १६, २०, २५, ३० निषादः ३, ७, ८, ११, १४, गान्धारः ४, पञ्चमः ६, १७, २४, २८ मध्यमः १०, २३ ऋषभः [उ], [र], षड्जः [क] १३ निषादः [क] पञ्चमः [र] वतः [क], षड्जः [र] १६ ऋषभः [उ] धैवतः [क] पञ्चमः [र] १८ षड्जः [क] पञ्चमः [र] वतः [क], षड्जः [र] २२ निषादः [क], धैवतः [र] २६ निषादः [क], गान्धारः [र] ३१ ॥

॥ ओ३म् ॥ इषे त्वोर्जे त्वा वायवं स्थ देवो वः सविता प्रार्पयतु श्रेष्ठ्तमाय कर्म्मण आ प्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ १ ॥ वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि विश्वधा असि । परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥ २ ॥ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥ ३ ॥ सा विश्वायुः सा विश्वकर्म्मा सा विश्वधायाः । इन्द्रस्य त्वा भागꣳसोमेना तनच्मि विष्णो हव्यꣳरक्ष ॥ ४ ॥ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमि ॥ ५ ॥ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । कर्मणे वां वेषाय वाम् ॥ ६ ॥ प्रत्युष्टꣳरक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निष्टप्ता अरातयः । उर्वन्तरिक्षमन्वेमि ॥ ७ ॥ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामः ॥ देवानामसि वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् ॥ ८ ॥ अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् । विष्णुस्त्वा क्रमतामुरु वातायापहतꣳ रक्षो यच्छन्तां पञ्च ॥ ९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ १० ॥ भूताय त्वा नारातये स्वरभिविख्येषन्दृꣳहन्तां दुर्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि । पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यꣳ रक्ष ॥ ११ ॥ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । देवीरापो अग्रेगुवो अग्रेपुवोऽग्र इममद्य यज्ञन्नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम् ॥ युष्मा इन्द्रो वृणीत वृत्रतूर्य्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये प्रोक्षिताः स्थ ॥ अग्नये त्वा जुष्टम्प्रोक्षाम्यग्नीषोमाभ्यां त्वा जुष्टम्प्रोक्षामि । दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥ १३ ॥ शर्म्मास्यवधूतꣳ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु । अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु ॥ १४ ॥ अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि बृहद्ग्रावासि वानस्पत्यः स इदन्देवेभ्यो हविः शमीष्व सुशमि शमीष्व । हविष्कृदेहि हविष्कृदेहि ॥ १५ ॥ कुक्कुटोसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ संघातꣳसंघातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयोऽपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः

यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ॥१६॥ धृष्टिरस्यपाऽग्ने अग्नि-
जहि निष्क्रव्यादं सेधा देवयजं वह । ध्रुवमसि पृथिवीं दृंह ब्रह्मवनि
क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥१७॥ अग्ने ब्रह्म गृभ्णीष्व
मस्यन्तरिक्षं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य
। धर्त्रमसि दिवं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृ-
वधाय । विश्वाभ्यस्त्वाशाभ्य उपदधामि चितस्थोर्ध्वचितो भृगूणामङ्गिर-
सां तपसा तप्यध्वम् ॥१८॥ शर्मास्यवधूतं रक्षोऽवधूता अरातयोऽदित्यास्त्वग-
सि प्रति त्वादितिर्वेत्तु । धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु दिवस्कम्भ-
नीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु ॥ १९ ॥ धान्यमसि धिनुहि
प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धान्देवो वः
सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयो-
॥ २० ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
सं वपामि समाप ओषधीभिः समोषधयो रसेन सं रेवतीर्जगतीभिः पृच्यन्तां सं
मधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥२१॥ जनयत्यै त्वा सं यौमीदमग्नेरिदम-
ग्नीषोमयोरिषे त्वा घर्मोऽसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्
अग्निष्टे त्वचं मा हिंसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥ २२ ॥
मा भेर्मा संविक्था अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात्त्रिताय त्वा द्विताय
त्वैकताय त्वा ॥ २३ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्याम् । आददेऽध्वरकृतं देवेभ्य इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा
वायुरसि तिग्मतेजा द्विषतो वधः ॥ २४ ॥ पृथिवि देवयजन्योषध्यास्ते मूलम्मा
हिंसिषं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां
शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ २५ ॥ अपारुं
पृथिव्यै देवयजनाद्बध्यासं व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परम-
स्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ।
अररो दिवं मा पप्तो द्रप्सस्ते द्यां मा स्कन् व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौर्बधान
देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्त-
मतो मा मौक् ॥२६॥ गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा
परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामि । सुक्ष्मा चासि शिवा चासि स्यो-
ना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च ॥ २७ ॥ पुरा क्रूरस्य विसृ-

पोविरप्शिशुर्नादाय पृथिवीं जीवदानुम् । यामैरयँश्चन्द्रमसि स्वधा धीरासो अनुदिश्य यजन्ते । प्रोक्षणीरासादय द्विषतो बधोसि ॥ २८ ॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳरक्षो निष्टप्ता अरातयः । अनिशितासि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि क । प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳरक्षो निष्टप्ता अरातयः । अनिशितासि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि र ॥ २९ ॥ अदित्यै रास्नासि विष्णोर्वेष्पोस्यूर्जे त्वाऽदब्धेन त्वा चक्षुषावपश्यामि अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे ॥ ३० ॥ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः क । शुक्रमस्यमृतमसि धाम नामासि प्रियन्देवानामनाधृष्टं देवयजनमसि र ॥

॥ इति प्रथमोऽध्यायः ॥



## ॥ अथ द्वितीयोऽध्यायः ॥



परमेष्ठी प्रजापतिर्ऋषिः १–१६, १८–२० देवलः १७ वामदेवः २१

देवता—यज्ञः १, २, ५ अग्निः ३, ४, ७, ९, १४, १७, २० ... विष्णुः ६, ८, २५ इन्द्रः १०, २२ द्यावापृथिवी ११ सविता १२ बृहस्पतिः १३ अग्नीषोमौ क इन्द्राग्नी र १५ द्यावापृथिवी मित्रावरुणौ च क ... १६ विश्वे देवाः १८, अग्निवायू १९ अग्निसरस्वत्यौ २० प्रजापतिः २३ त्वष्टा २४ ईश्वरः २६ पितरः ३१–३३ आपः ३४ ।

छन्दः—निचृत्पङ्क्तिः १ स्वराड्जगती २ भुरिगार्ची त्रिष्टुप् उ, ... पङ्क्तिः क, पङ्क्तिः र ३ गायत्री ४, ३३ निचृद्ब्राह्मी बृहती ५ ब्राह्मी ... निचृत्त्रिष्टुप् र ६ भुरिक्पङ्क्तिः ७, १६, ३० विराट् पङ्क्तिः ८ जगती ... भुरिग्ब्राह्मी पङ्क्तिः १० ब्राह्मीबृहती ११ भुरिग्बृहती १२ विराड्...

अनुष्टुप् , निचृद् गायत्री १४ ब्राह्मीबृहती , अतिजगती १५ निचृ-
पङ्क्तिः , विराट् त्रिष्टुप् १६ स्वराट् त्रिष्टुप् १८ भुरिग्ब्राह्मी त्रिष्टुप्
भुरिग्ब्राह्मीबृहती २१ विराट् त्रिष्टुप् २२, २४ निचृद्बृहती २३ निचृदार्ची
आर्ची पङ्क्तिः , जगती २५ उष्णिक् २६ निचृत्पङ्क्तिः गायत्री
भुरिगुष्णिक् २८, ३४ स्वराडार्षी अनुष्टुप् २६ बृहती ३१ ब्राह्मीबृहती ,
बृहती ३२ ॥

स्वरः—पञ्चमः १, ७, ८, १०, १६, ३०, ३२ निषादः २, ६, १३, १७
, पञ्चमः , ३ षड्जः ४, ३३ मध्यमः ५, ११, १२, २१, २३, ३१,
: ६, १८, २०, २२, २४ गान्धारः , षड्जः १४ मध्यमः , निषादः
पञ्चमः , धैवतः १६ पञ्चमः , निषादः २५ ऋषभः २६, २८, ३४
मः , षड्जः २७ गान्धारः २६ ॥

॥ ओ३म् ॥ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा
प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि ॥ १ ॥ अदित्यै व्युन्दनमसि
ोस्तुपोऽस्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थान् देवेभ्यो भुवपतये स्वाहा भुव-
ये स्वाहा भूतानाम्पतये स्वाहा ॥ २ ॥ गन्धर्वस्त्वा विश्वावसुः परि दधातु
स्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । इन्द्रस्य बाहुरसि द-
ो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः । मित्रावरुणौ
रतः परिधत्तान्ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड
: ॥ ३ ॥ वीतिहोत्रन्त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे
समिदसि सूर्य्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्यै । सवितुर्बाहू स्थऽऊर्ण-
रन्त्वा स्तृणामि स्वासस्थन्देवेभ्य आ त्वा वसवो रुद्रा आदित्याः सदन्तु ॥५॥
घृर्यसि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सद आसीद घृताच्यस्युपभृन्नाम्ना
प्रियेण धाम्ना प्रियꣳ सद आसीद घृताच्यसि ध्रुवा नाम्ना सेदं प्रियेण
ा प्रियꣳ सद आसीद । प्रियेण धाम्ना प्रियꣳ सद आसीद ध्रुवा असदन्नृत-
योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञन्यम् ॥ ६ ॥
वाजजिद्वाजन्त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि । नमो देवेभ्यः स्वधा पितृ-
सुयमे मे भूयास्तम् ॥ ७ ॥ अस्कन्नमद्य देवेभ्य आज्यꣳ संभ्रियासमङ्घ्रिणा
ो मा त्वाव क्रमिषं वसुमतीमग्ने ते छायामुपस्थेषं विष्णो स्थानमसीत इन्द्रो
मकृणोदूर्ध्वोऽध्वरऽआस्थात् ॥८॥ अग्ने वेर्होत्रं वेर्दूत्यमवतान्त्वान्द्यावापृथिवी

अत्र त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्य इन्द्र आज्ज्येन हविषा भूत्स्वाहा सं
ज्योतिः ॥६॥ मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम्
कंᳬ सन्त्वाशिषः सत्या नः सन्त्वाशिष उपहूता पृथिवी मातोपमां पृथि
ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ १० ॥ उपहूतो द्यौष्पितोपमां द्यौष्पिता ह्व
राग्नीध्रात्स्वाहा । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता
प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि ॥ ११ ॥ एतन्ते देव सवितर्यज्ञं प्राहुर्
ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥ १२ ॥ मनो जूतिर्जुषता
बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञᳬसमिमन्दधातु । विश्वे देवास इह मादय
म्प्रतिष्ठ ॥ १३ ॥ एषा ते अग्ने समित्तया वर्धस्व चाचप्यायस्व । वर्धिषी
वयमा च प्यासिषीमहि [क] । अग्ने वाजजिद्वाजं त्वा ससृवाᳬ संवा
संमार्ज्मि [र] ॥ १४ ॥ अग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन
अग्नीषोमौ तमप नुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं
हामि [क] । इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि । इन्द्राग्नि
नुदतां योऽस्मान् द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि [र] ॥
भ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा संजानाथां द्यावापृथिवी मित्रावरुणौ त्
वताम् [क] । व्यन्तु वयोक्तᳬ रिहाणा मरुतां पृषतीर्गच्छ वशा पृश्निर्भू
गच्छ ततो नो वृष्टिमावह । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि [र] ॥ १६ ॥ यं वो
पर्यधत्था अग्ने देवपणिभिर्गुह्यमानः । तन्त एतमनुजोषं भराम्येष मेत्वदप
अग्नेः प्रियं पाथोऽपीतम् ॥ १७ ॥ सᳬ स्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठा
यांश्च देवाः । इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्व
वाट् ॥ १८ ॥ घृताची स्थो धुर्यौ पातᳬ सुम्ने स्थः सुम्ने मा धत्तम्
श्वत उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टेमे सन्तिष्ठस्व ॥ १९ ॥ अग्नेऽद
शीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या
पितुं कृणु सुषदा योनौ स्वाहा वाडग्नये संवेशपतये स्वाहा सरस्वत्यै यशो
स्वाहा ॥ २० ॥ वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो
देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं देव यज्ञᳬ स्वाहा
॥२१॥ संबर्हिरङ्क्ताᳬ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः । सम
श्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा ॥ २२ ॥ कस्त्वा विमुञ्चति
विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषाय रक्षसां भागोऽसि

मा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु नुमार्ष्टु तन्वो यद्विलिष्टम् ॥२४॥ दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन सा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । पृथिव्यां विष्णुर्व्य- त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽस्माद- स्यै प्रतिष्ठाया अगन्म स्वः संज्योतिषाभूम ॥२५॥ स्वयंभूरसि श्रेष्ठो रश्मि- दा असि वर्चो मे देहि । सूर्यस्यावृतमन्वावर्ते ॥२६॥ अग्ने गृहपते सुगृह- त्वयाऽग्नेहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाऽग्ने गृहपतिना भूयाः । रि णौ गार्हपत्यानि सन्तु शतꣳ हिमाः सूर्यस्यावृतमन्वावर्ते ॥२७॥ व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । इदमहं य एवास्मि सोऽस्मि ॥२८॥ कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा । अपहता असुरा रक्षाꣳसि दः ॥२९॥ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परा- निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥३०॥ अत्र पितरो मादयध्वं भागमावृषायध्वम् । अमीमदन्त पितरो यथाभागमावृषायिषत ॥३१॥ नमो पितरो रसाय नमो व पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः यै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मै तद्वः पितरो वासः ॥३२॥ त्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥३३॥ ऊर्ज्जं वह- मृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ॥३४॥

॥ इति द्वितीयोऽध्यायः ॥

---

## ॥ अथ तृतीयोऽध्यायः ॥

—(*)—

ऋषिः—आङ्गिरसः १ सुश्रुतः २ भारद्वाजः ३, १३ प्रजापतिः ४, ५, ६,

१०, ४४, ४५, सार्पराज्ञी कद्रूः ६—८ गोतमः ११, ५१, ५२ विरूपः ववातभरतौ १४ वामदेवः १५, ३६, ३७ आऽवत्सारः १६—१९ या २०, २१ वैश्वामित्रो मधुच्छन्दाः २२—२४ सुबन्धुः २५, २६ श्रुतबन्धुः बन्धुः २८ मेधातिथिः २९ सप्तधृतिर्वारुणिः ३०—३३ मधुच्छन्दः ३४ मित्रः ३५ आसुरिः ३८—४१ शंयुः ४२ शंयुर्बार्हस्पत्यः ४३ आगस्त्य ४७ और्णवाभः ४८—५० बन्धुः ५३—५६ वशिष्ठः ६०, ६१ ना ६२, ६३ ।

देवता—अग्निः १—४, ६—८, ११, १२, १४—१६, २२ ३६, ३८—४०, ४७ अग्निवायुसूर्याः ५ अग्निसूर्यौ ९ अग्निः [क], सूर्यः इन्द्राग्नी १३ आपः २० विश्वेदेवाः २१ बृहस्पतिः २८, २९ ब्रह्मणस्पतिः आदित्यः ३१—३३ इन्द्रः ३४, ५०—५२ सविता ३५ प्रजापतिः ३७ रग्निः ४१ वास्तुपतिरग्निः ४२ वास्तुपतिः ४३ मरुतः ४४, ४५ इन्द्रमारुत यज्ञः ४८, ४९ मनः ५३—५५ सोमः ५६ रुद्रः ५७—६३ ।

छन्दः—गायत्री— १-४, ६—८, १६, २३, २९, ४४, ५६ दैवी निचृद्बृहती [र] ५ पङ्क्तिः ९ गायत्री [क], भुरिग्गायत्री [र] १० निचृद्गायत्री १२, ३०, ३२, ३५, ३६, ५५ स्वराट् त्रिष्टुप् १३ स्वराडनुष्टुप् १४, ४५ त्रिष्टुप् १५ त्रिष्टुप् १७ निचृद्ब्राह्मी पङ्क्तिः १८ जगती १९ भुरिग् बृहती २५, ३९ उष्णिक् २१, ६२, भुरिगासुरी गायत्री [क] गायत्री [र] २२ विराट् २४, २७, २८, ३१, ३३, ५४, स्वराड् बृहती २६ पथ्या बृहती ३४ ब्राह्म्यु ३७, अनुष्टुप् ३८, ४२, ४९ निचृदनुष्टुप् ४०, ५७ आर्षीपङ्क्तिः ४१ गती ४३, ६३ भुरिक् पङ्क्तिः ४६ विराडनुष्टुप् ४७ ब्राह्म्यनुष्टुप् ४८ ष्टुप् ५० विराट् पङ्क्तिः ५१, ५२, ५८ अतिपादनिचृद्गायत्री ५३ स्वराट् ५९ विराड्ब्राह्मी त्रिष्टुप् ६० भुरिगास्तारपङ्क्तिः ६१ ।

स्वरः—षड्जः १—४, ६—८, १०—१२, १६, २२—२४, २७- ३५, ३६, ४४, ५३—५६, ५९ मध्यमः ५, २०, २५, २६, ३४, ३९ ९, १८, ४१, ४६, ५१, ५२, ५८, ६१ धैवतः १३, १५, १७, ६० गा १४, ३८, ४०, ४२, ४५, ४७—५०, ५७ निषादः १९, ४३, ६३, २१, ३७, ६२ ॥

॥ ओ३म् ॥ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या

॥ १ ॥ सुसमिद्धाय शोचिषे घृतन्तीव्रञ्जुहोतन । अग्नये जातवेदसे ॥ २ ॥
समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचायविष्ठ्य ॥ ३ ॥ उप त्वा-
हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ॥ ४ ॥ भूर्भुवः स्वर्द्यौ-
भूम्ना पृथिवीव वरिम्णा । तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नाद-
द्यायादधे ॥ ५ ॥ आयङ्गौः पृश्निरक्रमीदसदन् मातरम्पुरः । पितरञ्च प्रय-
॥ ६ ॥ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम्
॥ त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभिः ॥ ८ ॥
ज्योतिज्र्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिज्र्ज्योतिः सूर्य्यः स्वाहा । अग्नि-
ज्योतिर्वर्च्चः स्वाहा सूर्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा । ज्योतिः सूर्य्यः सूर्य्यो
तिः स्वाहा ॥ ९ ॥ सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणो अग्नि-
स्वाहा । सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्य्यो वेतु स्वाहा
० ॥ उपप्रयन्तोऽध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ ११ ॥
र्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाꣳ रेताꣳसि जिन्वति ॥ १२ ॥
वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै । उभा दाताराविषाꣳ
रयीणामुभा वाजस्य सातये हुवे वाम् ॥ १३ ॥ अयन्ते योनिर्ऋत्वियो यतो
ऽअरोचथाः । तञ्जानन्नग्नऽआरोहाथा नो वर्द्धया रयिम् ॥ १४ ॥ अयमिह
धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचु-
चित्रं विभ्वं विशेविशे ॥ १५ ॥ अस्य प्रत्नामनु द्युतꣳ शुक्रन्दुदुह्रेऽअह्रयः ।
सहस्रसामृषिम् ॥ १६ ॥ तनूपाऽअग्नेऽसि तन्वम्मे पाह्यायुर्दाऽअग्नेस्यायुर्मे
वर्च्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण ॥ १७ ॥
नास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि वयस्वन्तो वयस्कृतꣳ सहस्वन्तः
कृतम् । अग्ने सपत्नदम्भनमदब्धासोऽदाभ्यम् । चित्रावसो स्वस्ति ते
शीय ॥ १८ ॥ सन्त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाꣳ स्तुतेन । सम्प्रि-
धाम्ना समहमायुषा संवर्चसा सम्प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥ १९ ॥
स्थान्धो वो भक्षीय महस्थ महो वो भक्षीयोर्ज्जस्थोर्ज्जं वो भक्षीय रायस्पो-
रायस्पोषं वो भक्षीय ॥ २० ॥ रेवती रमध्वमस्मिन्योनावस्मिन् गोष्ठेऽस्मिँ-
केऽस्मिन् क्षये । इहैव स्त मापगात ॥ २१ ॥ सꣳहितासि विश्वरूप्यूर्जा
विश गौपत्येन । उप त्वाग्ने दिवेदिवे दोषावस्तर्द्धिया वयम् । नमो भरन्त
से ॥ २२ ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्द्धमानꣳ स्वे दमे

॥ २३ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये
अग्ने त्वन्नोऽअन्तमऽउत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवा
नक्षि द्युमत्तमᳬ रयिन्दाः ॥ २५ ॥ तन्त्वा शोचिष्ठ दीदिवः सुम्नाय
सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्याणोऽघायतः समस्मात् ॥ २
एह्यदितऽएहि काम्याऽएत । मयि वः कामधरणम्भूयात् ॥ २७ ॥
स्वरणङ्कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ २८ ॥ यो रेवा
मीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ २९ ॥ मा नः श
अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३० ॥ महि त्री
ऽस्तु द्युक्षम्मित्रस्यार्य्यम्णः । दुराधर्षं वरुणस्य ॥ ३१ ॥ नहि तेषाममा
ध्वसु वारणेषु । ईशे रिपुरघशᳬसः ॥ ३२ ॥ ते हि पुत्रासो अदितेः
मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३३ ॥ कदा चन स्तरीरसि नेन्द्र सश्च
शुषे । उपोपेन्नु मघवन् भूयऽइन्नु ते दानं देवस्य पृच्यते ॥ ३४ ॥ तत्सवि
ण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३५ ॥ परि ते
रथोऽस्माँ२॥ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥३६॥ भूर्भुवः स्वः
प्रजाभिः स्याᳬ सुवीरो वीरैः सुपोषः पोषैः । नर्य्य प्रजाम्मे पाहि शᳬस्य
पाह्यथर्य्य पितुम्मे पाहि ॥ ३७ ॥ आगन्म विश्ववेदसमस्मभ्यं वसुवित्तम
सम्राडभि द्युम्नमभि सह आ यच्छस्व ॥ ३८ ॥ अयमग्निर्गृहपति
पूजायां वसुवित्तमः । अग्ने गृहपतेऽभि द्युम्नमभि सह आयच्छस्व ॥
अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्द्धनः । अग्ने पुरीष्याभिद्युम्नमभि
यच्छस्व ॥ ४० ॥ गृहा मा बिभीत मा वेपध्वमूर्ज्जं बिभ्रत एमसि । ऊर्ज्जं
सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ४१ ॥ येषामध्येति प्रवस
मनसो बहुः । गृहानुप ह्वयामहे ते नो जानन्तु जानतः ॥४२॥ उपहूताऽ
ऽउपहूताऽअजावयः । अथोऽअन्नस्य कीलालऽउपहूतो गृहेषु नः । क्षेमाय
न्त्यै प्रपद्ये शिवᳬशग्मᳬशंयोः शंयोः॥ ४३ ॥ प्रघासिनो हवामहे मरु
शादसः । करम्भेण सजोषसः ॥४४॥ यद्ग्रामे यदरण्ये यत्सभायां यदि
यदेनश्चकृमा वयमिदन्तदव यजामहे स्वाहा ॥ ४५ ॥ मोषूणऽइन्द्रात्र पृ
स्तिहि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरु
गीः ॥ ४६ ॥ अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवः देवेभ्यः कर्म
प्रेत सचाभुवः ॥ ४७ ॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।

तमेनोयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ॥ ४८ ॥ पूर्णा दर्वि परा पत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा ऽइषमूर्जंᳬ शतक्रतो ॥ ४९ ॥ देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारं च हरासि मे निहारन्निर्हराणि स्वाहा ॥ ५० ॥ अक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती यो जान्विन्द्र ते हरी ॥ ५१ ॥ सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णबन्धुर स्तुतो यासि वशाँ२ ॥ अनु योजान्विन्द्र ते हरी ॥ ५२ ॥ मनो न्वाह्वामहे नाराशᳬसेन स्तोमेन । पितॄणां च मन्मभिः ॥ ५३ ॥ आ नऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ ५४ ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातᳬ सचेमहि ॥ ५५ ॥ वयᳬ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥ ५६ ॥ एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहा । एष ते रुद्र भाग आखुस्ते पशुः ॥ ५७ ॥ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ ५८ ॥ भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्यै ॥ ५९ ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनं । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ॥ ६० ॥ एतत्ते रुद्रावसं तेन परो मूजवतोतीहि । अवततधन्वा पिनाकावसः कृत्तिवासा अहिᳬसन्नः शिवोऽतीहि ॥ ६१ ॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ ६२ ॥ शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिᳬसीः । निवर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ ६३ ॥

॥ इति तृतीयोऽध्यायः ॥

---

## अथ चतुर्थोऽध्यायः ॥



ऋषिः—प्रजापतिः १—७ आत्रेयः ८ आङ्गिरसः ९—१५ वत्सः १६—३६ ...ः ३७ ।

देवता—अवोषध्यौ १ आपः २, १२, १३ मेघः ३ परमात्मा ४, ६, १०,२४, २६, ३७ अग्न्यर्वृहस्पतयः ७ ईश्वरः ८ विद्वान् ६, २७, ११,१४—१७, २८, २६, ३२ वाग्विद्युत् १८—२३ सविता २५ वरुणः ३१ सूर्य्यविद्वांसौ ३३ यजमानः ३४ सूर्य्यः ३५, ३६ ।

छन्दः—विराड् ब्राह्मी जगती १ स्वराड् ब्राह्मी त्रिष्टुप् २ भुरिक् ३ निचृद्ब्राह्मी पङ्क्तिः ४ निचृदार्ष्यनुष्टुप् ५, ६, २६, ३२ पङ्क्तिः क बृहती र ७ आर्ष्यनुष्टुप् ८ आर्षी पङ्क्तिः ६ निचृदार्षी जगती क साम्नी ष्टुप् र १० स्वराड् ब्राह्म्यनुष्टुप् क आर्ष्युष्णिक् र ११ ब्राह्म्यनुष्टुप् १२ गार्षी पङ्क्तिः १३, १६ स्वराडार्ष्युष्णिक् १४ भुरिग्ब्राह्मी बृहती १५ त्रिष्टुप् १७ स्वराडार्षीबृहती १८ भुरिग्ब्राह्मी पङ्क्तिः १६ साम्नी ज भुरिगार्ष्युष्णिक् र २० विराडार्षी बृहती २१ ब्राह्मी पङ्क्तिः २२ आस्तारप २३ ब्राह्मी जगती क याजुषी पङ्क्तिः र २४ विराड् ब्राह्मी जगती क नि गायत्री र २५ भुरिग्ब्राह्मी पङ्क्तिः २६, २७ साम्नीबृहती क साम्न्युष्णि २८ स्वराड्याजुषी त्रिष्टुप् क, विराडार्षी त्रिष्टुप् र ३० स्वराडार्षी त्रिष्टु भुरिगार्षी पङ्क्तिः क, याजुषी जगती र ३३ भुरिगार्षी गायत्री क, भुरि बृहती र, विराडार्च्यनुष्टुप् उ ३४ निचृदार्षीजगती ३५ विराड् ब्राह्मी बृहती निचृदार्ची त्रिष्टुप् ३७ ।

स्वरः—निषादः १, ३५ धैवतः २, ३, १७, ३०, ३१, ३७ पञ्च ६, १३, १६, १६, २२, २३, २६, २७, गान्धारः ५, ६, ८, १२, २४ पञ्चमः क मध्यमः र ७ निषादः क धैवतः र १० गान्धारः क ऋषभः ऋषभः १४ मध्यमः १५, १८, २१, ३६, निषादः क ऋषभः र २० नि पञ्चमः र २४ निषादः क षड्जः र २५ मध्यमः क ऋषभः र २८ पञ्च निषादः र ३३ षड्जः क मध्यमः र, गान्धारः उ ३४ ॥

॥ ओ३म् ॥ एदमगन्म देवयजनम्पृथिव्या यत्र देवासो अजुषन्त ऋक्सामाभ्याᳪ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम । इमा आ मे सन्तु देवी । ओषधे त्रायस्व स्वधिते मैनᳪ हिᳪसीः ॥ १ ॥ आपो न्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वᳪ हि रिप्रम्प्रवहन्ति उदिदाभ्यः शुचिरापूत एमि । दीक्षातपसोस्तनूरसि तान्त्वा शिवाᳪ शग्म दधे भद्रं वर्णं पुष्यन् ॥ २ ॥ महीनाम्पयोऽसि वर्चोदा असि वर्चो मे

स्यासि कनीनकश्चक्षुर्दा असि चक्षुर्मे देहि ॥ ३॥ चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥४॥ आ वो देवास ईमहे वामम्प्रयत्यध्वरे । आ देवास आशिषो यज्ञियासो हवामहे ॥५॥ स्वाहा यज्ञम्मनसः स्वाहोरोरन्तरिक्षात् । स्वाहा द्यावापृथिवीभ्याᳪस्वाहा वातादारभे स्वाहा ॥६॥ आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा । आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उरो अन्तरिक्ष बृहस्पतये हविषा विधेम स्वाहा ॥ ७ ॥ विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ८ ॥ ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः । शर्म्मासि शर्म्म मे यच्छ नमस्तेऽस्तु मा मा हिᳪसीः ॥९॥ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्ज्जं मयि धेहि । सोमस्य नीविरसि विष्णोः शर्म्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि । उच्छ्रयस्व वनस्पत ऊर्द्ध्वो मा पाह्यᳪहस आस्य यज्ञस्योदृचः ॥१०॥ व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः । दैवीन्धियम्मनामहे सुमृडीकामभिष्टये वर्च्चोधां यज्ञवाहसᳪ सुतीर्था नो असद्वशे । ये देवा मनोजाता मनोयुजो दक्षक्रतवस्तेनोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥११॥ श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥१२॥ इयं ते यज्ञिया तनूरपो मुञ्चामि न प्रजाम् । अᳪहोमुचः स्वाहाकृताः पृथिवीमाविशत पृथिव्या सम्भव ॥१३॥ अग्ने त्वᳪसु जागृहि वयᳪसु मन्दिषीमहि । रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ॥१४॥ पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रम्म आगन् । वैश्वानरोऽदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ १५ ॥ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा । त्वं यज्ञेष्वीड्यो रास्वेयत्सोमाभूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥१६॥ एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजङ्गच्छ । जूरसि धृता मनसा जुष्टा विष्णवे ॥ १७ ॥ तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा । शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥ चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥ अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । सा देवि देवमच्छेहीन्द्राय

न्द्राय सोमꣳ रुद्रस्त्वा वर्त्तयतु स्वस्ति सोमसखा पुनरेहि ॥ २० ॥ वस्व्य
तिरस्यादित्यासि रुद्रासि चन्द्रासि । बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभि
॥ २१ ॥ अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मि देवयजने पृथिव्या इडायास्पदमसि
स्वाहा । अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयꣳ रायस्पोषे
यौष्म तोतो रायः ॥ २२ ॥ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा
म आयुः प्र मोषीर्मो अहन्तव वीरं विदेय तव देवि सन्दृशि ॥ २३ ॥ [क]
गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रू
ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानाꣳ साम्राज्यङ्गच्छेति मे
ब्रूतात् । [र] आस्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा वि चिन्वन्तु ॥ २४
अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि
मतिं कविम् । ऊर्द्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमी
सुक्रतुः कृपा स्वः प्रजाभ्यस्त्वा प्रजास्त्वाऽनुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥
शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रञ्चन्द्रेणामृतममृतेन । सग्मे ते गोरस्मे ते चन्
तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम् ॥
मित्रो न एहि सुमित्रध इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्यो
स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्र
क्षध्वं मा वो दभन् ॥ २७ ॥ [क] परिमाग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज । [र]
युषा स्वायुषोदस्थाममृताꣳ२ ॥ अनु ॥ २८ ॥ प्रति पन्थामपद्महि स्वस्तिगामने
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ २९ ॥ [क] अदित्यास्त्वगस्य
सद आसीद । [र] अस्तभ्नाद्द्यां वृषभोऽअन्तरिक्षममिमीत वरिमाणम्पृथिव्या
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ॥ ३० ॥ वनेषु
न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतुं वरुणो विक्ष्वग्नि
सूर्यमदधात् सोममद्रौ ॥ ३१ ॥ सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् ।
तशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३२ ॥ [क] उस्रावेतं धूर्षाहौ युज्येथा
श्रू अवीरहणौ ब्रह्मचोदनौ । [र] स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ ३३
भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभिधामानि । [र] मा त्वा परिपरिणो
दन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो विदन् । [उ] श्येनो
परापत यजमानस्य गृहान् गच्छतन्नौ सꣳस्कृतम् ॥ ३४ ॥ नमो मित्रस्य
णस्य चक्षसे महो देवाय तदृतꣳ सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पु

र्यीय शंसत ॥ ३५ ॥ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो णस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ३६ ॥ याते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गय- ानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोमदुर्यान् ॥ ३७ ॥

॥ इति चतुर्थोऽध्यायः ॥

## ॥ अथ पञ्चमोऽध्यायः ॥



ऋषिः—गोतमः १—१४ मेधातिथिः १५ वसिष्ठः १६, १७ औतथ्योदी- ामा १८—२९ मधुच्छन्दाः ३०—३५ आगस्त्यः ३६—४३ ।

देवता—विष्णुः १, १५—२१, २८, ४१ विष्णुर्यज्ञः २ यज्ञः ३, १३, २, २३, २५—२८, ४३ अग्निः ४, ६, ८, ९, ३१—३७, ४०, ४२ विद्युत् सोमः ७ वाक् १०—१२ सविता १४ सूर्य्यविद्वांसौ २४ ईश्वरसभाध्यक्षौ , ३० सोमसवितारौ ३९ ।

छन्दः—स्वराड् ब्राह्मीबृहती १ आर्षीगायत्री [क], आर्चीत्रिष्टुप् [२] २ आर्षी ङ्क्तिः ३ आर्षीत्रिष्टुप् ४ आर्ष्युष्णिक् [क] भुरिगार्षी पङ्क्तिः [२] ५ विराड् ह्मी पङ्क्तिः ६ आर्षी बृहती [क] आर्षी जगती [२] ७ विराडार्षी बृहती [क] नि- दार्षी बृहती [२] ८ भुरिगार्षी गायत्री [१] भुरिग्ब्राह्मी बृहती [२] निचृद्ब्राह्मी [३] जगती या- ज्यनुष्टुप् [४] ९ ब्राह्म्युष्णिक् १० निचृद्ब्राह्मी त्रिष्टुप् ११ भुरिग् ब्राह्मी पङ्क्तिः २ भूरिगार्ष्यनुष्टुप् १३, २४ स्वराडार्षी जगती १४ भुरिगार्षी गायत्री १५ राडार्षी त्रिष्टुप् १६, १८ स्वराड्ब्राह्मी त्रिष्टुप् १७ निचृदार्षी जगती १९ राडार्षी त्रिष्टुप् २० भुरिगार्षी पङ्क्तिः २१ साम्नी पङ्क्तिः [क] भुरिगार्षी ती [२] २२ आयुषी बृहती [३] स्वराड्ब्राह्म्यनुष्टुप् [ख] स्वराड् ब्राह्म्युष्णिक् [२]

२३ ब्राह्मी बृहती क आर्षीपङ्क्तिः र २५ निचृदार्ची पङ्क्तिः क निचृ
ष्टुप् र २६ ब्राह्मी जगती २७ आर्षीजगती २८ अनुष्टुप् २६ आर्च्युष्णि
विराडार्ष्यनुष्टुप् ३१ स्वराड्ब्राह्मी त्रिष्टुप् ३२ ब्राह्मी पङ्क्तिः ३३ स्वरा
बृहती ३४ निचृद्ब्राह्मी पङ्क्तिः ३५ निचृदार्ची त्रिष्टुप् ३६ आर्षी त्रि
भुरिगार्ष्यनुष्टुप् ३८ साम्नी बृहती क आर्षी पङ्क्तिः र ३६ निचृद्ब्राह्मी
४० भुरिगार्ष्यनुष्टुप् ४१ स्वराड्ब्राह्मी त्रिष्टुप् ४२ ब्राह्मी त्रिष्टुप् ४३ ।

स्वरः—मध्यमः १, ८, ३४, ३६ षड्जः क धैवतः र २ पञ्चमः ३, ६,
३३, ३५, धैवतः ४, ११, १६–१८, २०, ३२, ३६, ३७, ४२, ४३,
पञ्चमः र ५ मध्यमः क निषादः र ७ षड्जः १ मध्यमः २ गान्धारः ३ निषा
ऋषभः १०, ३० गान्धारः १३, २४, २६, ३१, ३८, ४०, ४१,
१४, १९, २७, २८, षड्जः १५ पञ्चमः क, मध्यमः र २२ मध्यमः उ, गान्
ऋषभः र २३ मध्यमः क पञ्चमः र २५ पञ्चमः क धैवतः र २६ ॥

॥ ओ३म् ॥ अ॒ग्नेस्त॒नूर॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्य त॒नूर॑सि॒ विष्ण॑वे त्वा
राति॒थ्यम॑सि॒ विष्ण॑वे त्वा श्ये॒नाय॑ त्वा सोम॒भृते॒ विष्ण॑वे त्वा॒ऽग्नये॑ त्वा
षदे॒ विष्ण॑वे त्वा ॥ १ ॥ क अ॒ग्नेर्ज॒नित्र॑मसि॒ वृष॑णौ स्थ उ॒र्वश्य॒स्यायुर॑सि
असि र गा॒य॒त्रेण॑ त्वा छन्द॑सा मन्थामि॒ त्रैष्टु॑भेन त्वा छन्द॑सा मन्थामि॒
त्वा॒ छन्द॑सा मन्थामि ॥ २ ॥ भव॑तन्नः॒ सम॑नसौ॒ सचे॑तसावरे॒पसौ॑ मा य॒ज्ञ
सिष्टं॒ मा य॒ज्ञप॑तिं जा॒तवे॑दसौ शि॒वौ भ॑वतम॒द्य नः॑ ॥ ३ ॥ अ॒ग्नाव॒ग्निश्च
विष्ट॒ऽऋषी॑णाम्पु॒त्रो अ॑भिशस्ति॒पावा॑ । स नः॑ स्यो॒नः सु॒यजा॑ यजे॒ह
ह॒व्यꣳ सद॒मप्र॑युच्छ॒न् स्वाहा॑ ॥ ४ ॥ क आप॑तये त्वा॒ परि॑पतये गृह्णामि॒
शाक्व॒राय॒ शक्व॑न॒ऽओजि॑ष्ठाय॒ र अना॑धृष्टमस्यनाधृ॒ष्यं दे॒वाना॒मोजो॒ऽनभिशस्
स्ति॒पाऽअ॑नभिश॒स्तेन्य॒मञ्ज॑सा स॒त्यमुप॑गेषꣳ स्वि॒ते मा॑ धाः ॥ ५ ॥ अ
पा॒स्त्वे व्र॑तपा॒ या तव॑ त॒नूरि॒यꣳ सा मयि॒ यो मम॑ त॒नूरे॒षा सा त्वयि॑ ।
व्रतपते व्र॒तान्यनु॑ मे दी॒क्षान्दी॒क्षाप॑ति॒र्मन्य॑ता॒मनु॒ तप॒स्तप॑स्पतिः ॥ ६ ॥
शु॒र॑ꣳशुष्टे देव॒ सो॒माप्या॑यता॒मिन्द्रा॑यैकधन॒विदे॑ । आतुभ्य॒मिन्द्रः॒ प्याय॑ता॒
न्द्राय॑ प्यायस्व । र आप्या॑यया॒स्मान्त्सखी॑न्त्स॒न्न्या मे॒धया॑ स्व॒स्ति ते॑ दे
सु॒त्याम॑शीय । एष्टा॒ रायः॒ प्रेषे॒ भगा॑य॒ऽऋ॒तमृ॑तवा॒दिभ्यो॒ नमो॒ द्यावा॑पृथि
॥ ७ ॥ क या ते॑ऽअग्ने॒ऽयः॑ श॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा । उ॒ग्रं वचो॒ऽअपा॑व
वचो॒ऽअपा॑वधी॒त् स्वाहा॑ । र या ते॑ऽअग्ने रजः॒श॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा । उ॒ग्रं

पावधीत्त्वेषं वचोऽअपावधीत् स्वाहा । या तेऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचोऽअपावधीत् स्वाहा ॥ ८ ॥ [1] तप्तायनी मेऽसि वित्तायनी मे स्यवतान्मा नाथितादवतान्मा व्यथितात् । [2] विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि योऽस्यां पृथिव्यामसि यत्तेनाधृष्टन्नाम यज्ञियं तेन त्वा दधे विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना [3] नाम्नेहि यो द्वितीयस्यां पृथिव्यामसि यत्तेऽनाधृष्टन्नाम यज्ञियन्तेन त्वा दधे विदेदग्निर्नभो नामाग्नेऽअङ्गिर आयुना नाम्नेहि यस्तृतीयस्यां पृथिव्यामसि यत्तेनाधृष्टन्नाम यज्ञियन्तेन त्वा दधे । [4] अनु त्वा देववीतये ॥ ९ ॥ सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि सपत्नसाही देवेभ्यः । शुन्धस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥ १० ॥ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः पात्विदमहन्तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥ ११ ॥ सिꣳह्यसि स्वाहा सिꣳह्यस्यादित्यवनिः स्वाहा सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा सिꣳह्यस्यावह देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा ॥ १२ ॥ ध्रुवोऽसि पृथिवीन्दृꣳह ध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युतक्षिदसि दिवन्दृꣳहाग्नेः पुरीषमसि ॥ १३ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥ १४ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥ १५ ॥ इरावती धेनुमती हि भूतꣳसूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥ १६ ॥ देवश्रुतौ देवेष्वाघोषतम्प्राची प्रेतमध्वरं कल्पयन्तीऽऊर्ध्वं यज्ञन्नयतम्मा जिह्वरतम् । स्वं गोष्ठमावदतन्देवी दुर्येऽआयुर्मा निर्वादिष्टम्प्रजाम्मा निर्वादिष्टमत्र रमेथां वर्ष्मन् पृथिव्याः ॥ १७ ॥ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि । यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥ १८ ॥ दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा ॥ १९ ॥ प्र तद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २० ॥ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि । वैष्णवमसि विष्णवे त्वा ॥ २१ ॥ [5] देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ता-

भ्याम् । आदे॑दे नार्य॒सी॒दम॒हꣳ रक्ष॑सां ग्रीवा अपि॑कृन्तामि । बृहन्न॑सि पू०
बृहतीमिन्द्रा॑य वाचं वद ॥ २२ ॥ रक्षोहणं॑ बलगहनं॑ वैष्णवीमि॒दम॒हन्तं ये
मुत्कि॑रामि॒ यम्मे॒ निष्ट्यो यम॒मात्यो निचखाने॒दम॒हन्तं ब॑लगमुत्कि॑रामि॒ यम्मे॑
यमसमानो निचखाने॒दम॒हन्तं ब॑लगमुत्कि॑रामि॒ यम्मे॒ सब॑न्धुर्यमस॑बन्धुर्नि॑
म॒हन्तं ब॑लगमुत्कि॑रामि॒ यम्मे॑ सजा॒तो यमस॑जातो निचखानोत्कृ॒त्याङ्कि॑रामि
स्वरा॑डसि सपत्न॒हा स॑त्रराड॑स्यभिमाति॒हा जन॒राडसि रक्षो॒हा स॑र्वराड॑स्यमि
रक्षोहणो॑ वो बलगहनः प्रोक्षा॑मि वैष्णवान्र॑क्षोहणो॑ वो बलगहनोऽव॑
वैष्णवान्र॑क्षोहणौ॑ वो बलगहनोऽव॑स्तृणामि वैष्णवान्र॑क्षोहणौ॑ वां
उप॑दधामि वैष्णवी र॑क्षोहणौ॑ वां बलगहनौ॑ पर्यू॑हामि वैष्णवी वैष्णवम॑सि
वा स्थ ॥ २५ ॥ देवस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पूष्णो ह
म् । आदे॑दे नार्य॒सी॒दम॒हꣳ रक्ष॑साङ्ग्रीवा अपि॑कृन्तामि॒ । यवो॑ऽसि य
द्वेषो॑ यवयारा॑ती॒र्दिवे त्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै त्वा॒ शुन्ध॑न्ताँल्लोका
षद॑नाः पितृ॒षद॑नमसि ॥ २६ ॥ उद्दिवं॑स्तभानान्तरि॑क्षं पृण दृꣳह स्व
द्युता॒नस्त्वा॑ मारु॒तो मि॑नोतु मि॒त्रावरु॑णौ ध्रु॒वेण॒ धर्म॑णा । ब्रह्म॒वनि॑ त्वा
रायस्पोष॒वनि॒ पर्यू॑हामि । ब्रह्म॑ दृꣳह क्षत्रं दृꣳह॒ हायु॑र्दृꣳह प्र॒जान्दृꣳह
ध्रुवासि॑ ध्रुवोऽयं यज॑मानो॒ऽस्मिन्ना॒यत॑ने प्र॒जया॑ प॒शुभि॑र्भूयात् । घृतेन॑
थिवी पूर्ये॑था॒मिन्द्र॑स्य छ॒दिर॑सि विश्वजन॒स्य॑ छाया ॥ २८ ॥ परि॑ त्वा
गिर॑ऽइमा भ॑वन्तु वि॒श्वतः॑ । वृ॒द्धायु॑मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ २९
स्य स्यू॒रसीन्द्र॑स्य ध्रु॒वो॑ऽसि ऐ॒न्द्रम॑सि वैश्वदे॒वम॑सि ॥ ३० ॥ वि॒भूर॑सि
वह्नि॑रसि हव्य॒वाह॑नः । श्वा॒त्रो॑ऽसि॒ प्रचे॑तास्तु॒थो॑ऽसि वि॒श्ववे॑दाः ॥ ३
शिगा॑सि क॒विरङ्घा॑रिरसि॒ बम्भा॑रिरव॒स्यूर॑सि दुव॑स्वाञ्छु॒न्ध्यूर॑सि मार्जा
स॒म्राड॑सि कृ॒शानुः॑ परि॒षद्यो॑ऽसि॒ पव॑मानो॒ नभो॑ऽसि प्र॒तक्वा॑ मृ॒ष्टो॑ऽसि ह
ऋ॒तधा॑मासि॒ स्व॒र्ज्योतिः ॥ ३२ ॥ स॒मु॒द्रो॑ऽसि वि॒श्वव्य॑चा अ॒जो॑ऽस्येक
रसि बु॒ध्न्यो॑ वाग॑स्यै॒न्द्रम॑सि॒ सदो॑स्यृ॒तस्य॑ द्वारौ॑ मा मा॒सं ता॑प्त॒मध्व॑ना
प्र मा॑ तिर स्व॒स्ति मे॒ऽस्मिन् प॒थि दे॑व॒याने॑ भूयात् ॥ ३३॥ मि॒त्रस्य॑ मा
ध्वम॑ग्नयः सग॒राः सग॑रास्थ॒ सग॑रेण॒ नाम्ना॒ रौद्रे॒णानी॑केन पा॒तमा॑ग्नय
मा॑ग्नयो गोपा॒यत॑ मा नमो॑ वोऽस्तु मा मा॑ हिꣳसिष्ट ॥ ३४ ॥ ज्योति॑रसि
रू॒पं विश्वे॑षान्दे॒वाना॑ꣳ स॒मित् त्वꣳ सोम॑तनू॒कृद्भ्यो॒ द्वेषो॑भ्यो॒ऽन्यकृ॑तेभ्य
सि॒ वरू॑थꣳस्वाहा॑ । जु॒षा॒णो अ॒प्तुराज्य॑स्य वेतु स्वाहा॑ ॥ ३५ ॥ अग्ने॑ नय

ये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिं विधेम ॥ ३६ ॥ अयन्नो अग्निर्वरिवस्कृणोत्वयं मृधः पुरऽएतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसातावयᳬं शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥३७॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ॥ ३८ ॥ देवसवितरेष ते सोमस्तᳬं रक्षस्व मा त्वा दभन् । एतत्त्वं देव सोम देवो देवाँ२ ॥ उपागा इदमहम्मनुष्यान्त्सह रायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥ ३९ ॥ अग्ने व्रतपास्ते व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियᳬं सा मयि । यथायथन्नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिरमᳬंस्तानु तपस्तपस्पतिः ॥ ४० ॥ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ॥ ४१ ॥ अत्यन्याँ२॥ अगान्नान्याँ २॥ उपागामर्वाक्त्वा परेभ्योऽविदम्परोऽवरेभ्यः । तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा । ओषधे त्रायस्व स्वधिते मैनᳬं हिᳬंसीः ॥४२॥ द्याम्मा लेखीरन्तरिक्षम्मा हिᳬंसीः पृथिव्या संभव । अयᳬं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । अतस्त्वन्देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वियᳬं रुहेम ॥४३॥

॥ इति पञ्चमोऽध्यायः ॥

---

## ॥ अथ षष्ठोऽध्यायः ॥

ऋषिः—आगस्त्यः १ शाकल्यः २ दीर्घतमा ३, ६, ८, ९, १७—२३ मेधातिथिः ४, ५, ७, १०—१६, २४—२८ मधुच्छन्दाः २९–३५ गौतमः ३७।

देवता—सविता १, २, ३० विष्णुः ३, ४, ५ विद्वांसः ६, १२, १४, १५ त्वष्टा ७, २० बृहस्पतिः ८ सविता, अश्विनौ, पूषा ९ आपः १०, १३,

१७, २७ वातः ११ द्यावापृथिव्यौ १६, ३५ अग्निः १८, २६ वि॰
१९ सेनापतिः २१ वरुणः २२ अब्, यज्ञ, सूर्याः २३ सोमः २५, ३॰
२८ प्रजासभ्यराजानः ३१ सभापतीराजा ३२ यज्ञः ३४ इन्द्रः ३७।

छन्दः—पङ्क्तिः उ आसुरी क भुरिगार्ष्युष्णिक् र १ निचृद्गायत्री॰
पङ्क्तिः र २ आर्च्युष्णिक् उ साम्न्युष्णिक् क निचृत्प्राजापत्या बृहती र॰
दार्षी गायत्री ४, ५ आर्ष्युष्णिक् क भुरिक् साम्नी बृहती र ६ आर्षी॰
प्रजापत्यानुष्टुप् क निचृत् प्रजापत्या बृहती र ८ प्रजापत्या बृहती क॰
प्रजापत्या बृहती क निचृदार्षी बृहती र १० भुरिगार्ष्युष्णिक् ११ भुरि॰
पत्यानुष्टुप् १२ निचृदार्ष्यनुष्टुप् १३, २३ भुरिगार्षी जगती १४ नि॰
त्रिष्टुप् १५, २७, २८, ब्राह्म्युष्णिक् १६ निचृद्ब्राह्म्यनुष्टुप् १७ प्र॰
नुष्टुप् क पङ्क्तिः र १८ ब्राह्म्यनुष्टुप् १९, २० याजुष्यउष्णिक् २१॰
स्वराडुष्णिक् क विराड् गायत्री र २२ आर्षी त्रिष्टुप् क त्रिपाद्गायत्री॰
आर्षीविराडनुष्टुप् २५ गायत्री क आर्षी त्रिष्टुप् र २६ भुरिगार्षी ग॰
२९ स्वराडार्षी पङ्क्तिः ३० उष्णिक् ३१ पञ्चपाज्ज्योतिष्मती जगती ३॰
गार्षी बृहती ३३ स्वराडार्षी पथ्याबृहती ३४ भुरिगार्ष्यनुष्टुप् ३५, ३७॰

स्वरः—धैवतः उ ऋषभः क, र १ षड्जः क धैवतः र २ ऋषभ॰
मध्यमः र ३ षड्जः ४, ५, २६ ऋषभः क मध्यमः र ६ मध्यमः ७, १॰
३४ ऋषभः क मध्यमः र ८ मध्यमः क धैवतः र ९ ऋषभः ११, १॰
३१ गान्धारः १२, १३, १७, १९, २३, २५, २८, ३५, ३७ निषा॰
३२ पञ्चमः १५, ३० गान्धारः क पञ्चमः र १८ धैवतः २०, २७ ॰
पञ्चमः र २२ धैवतः क षड्जः र २४ षड्जः क धैवतः र २६ ।

॥ ओ३म् ॥ उ देवस्य॑ त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो ह॒॰
भ्यामाद॑दे॒ नार्य॑सी॒दम॒हꣳ रक्ष॑सां ग्री॒वा अपि॑ कृन्तामि । क यवो॑ऽसि॒ यू॒॰
स्मद् द्वेषो॑ य॒वयारा॑तीः र दि॒वे त्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै त्वा॒ शुन्ध॑न्ता॒॰
काः पि॑तृ॒षद॑नाः पितृ॒षद॑नमसि ॥ १ ॥ क अ॒ग्रे॒णीर॑सि स्वावे॒श उ॑न्ने॒तॄ॒॰
वि॒त्तादधि॑ त्वा स्थास्यति र दे॒वस्त्वा॑ सवि॒ता मध्वा॑नक्तु सुपिप्प॒लाभ्य॒स्त्वौष॑॰
द्याम॑ग्रेणास्पृक्ष॒ आन्तरि॑क्षं॒ मध्ये॑नाप्राः पृथि॒वीमुप॑रेणादृꣳहीः ॥ २ ॥
धामा॑न्यु॒श्मसि॒ गम॑ध्यै॒ यत्र॒ गावो॒ भूरि॑शृङ्गा अ॒यासः॑ । क अत्राह॒ तदु॑रुगा॒॰
ष्णोः प॑र॒मम्प॒दमव॑ भाति॒ भूरि॑ । र ब्र॒ह्म॒वनि॑ त्वा क्षत्र॒वनि॑ रायस्पोष॒वनि॑

मे ब्रह्म दृꣳह क्षत्रन्दृꣳहायुर्दृꣳह प्रजान्दृꣳह ॥ ३ ॥ विष्णोः कर्म्माणि प-
श्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ४ ॥ तद्विष्णोः परमम्प-
दꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ५ ॥ [क] परिवीरसि परि त्वा
दैवीर्विशो व्ययन्ताम्परीमं यजमानꣳ रायो मनुष्याणाम् । [र] दिवः सूनुरस्येष ते पृ-
थिव्याँल्लोक आरण्यस्ते पशुः ॥ ६ ॥ उपावीरस्युप देवान्दैवीर्विशः प्रागुरु-
शिजो वह्नितमान् । देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ॥ ७ ॥ [क] रेवती रम-
ध्वम्बृहस्पते धारया वसूनि । [र] ऋतस्य त्वा देवहविः पाशेन प्रति मुञ्चामि ध-
र्षा मानुषः ॥ ८ ॥ [क] देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्याम् । [र] अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि । अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता
मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । अग्नीषोमाभ्यान्त्वा जुष्ट-
म्प्रोक्षामि ॥ ९ ॥ [क] अपाम्पेरुरस्यापो देवीः स्वदन्तु स्वात्तञ्चित्सद्देवहविः ।
सन्ते प्राणो वातेन गच्छताꣳ समङ्गानि यजत्रैः संय्यज्ञपतिराशिषा ॥ १० ॥
घृतेनाक्तौ पशूँस्त्रायेथाꣳ रेवति यजमाने प्रियन्धा आविश । उरोरन्तरिक्षात्सजूर्दे-
वेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव । वर्षो वर्षीयसि यज्ञे यज्ञप-
तिन्धाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥ ११ ॥ माहिर्भूर्मा पृदाकुर्नमस्त आतानान-
र्वा प्रेहि । घृतस्य कुल्या उप ऋतस्य पथ्या अनु ॥ १२ ॥ देवीरापः शुद्धा वोढ्वꣳ सुप-
रिविष्टा देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म ॥ १३ ॥ वाचं ते शुन्धामि प्राणन्ते
शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते
शुन्धामि चरित्राँस्ते शुन्धामि ॥ १४ ॥ मनस्त आप्यायतां वाक्त आप्यायताम्प्राण-
स्त आप्यायताञ्चक्षुस्त आप्यायताꣳ श्रोत्रन्त आप्यायताम् । यत्ते क्रूरं यदा-
स्थितं तत्त आप्यायतान्निष्ट्यायतान्तत्ते शुध्यतु शमहोभ्यः । ओषधे त्रायस्व स्व-
धिते मैनꣳ हिꣳसीः ॥ १५ ॥ रक्षसाम्भागोऽसि निरस्तꣳ रक्ष इदमहꣳ रक्षो-
ऽभितिष्ठामीदमहꣳ रक्षोऽवबाध इदमहꣳ रक्षोऽधमन्तमो नयामि । घृतेन द्या-
वापृथिवी प्रोर्णुवाथां वायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृते
ऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥ १६ ॥ इदमापः प्रवहतावद्यञ्च मलञ्च यत् । य-
च्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् । आपो मा तस्मादेनसः पवमानश्च मुञ्चतु
॥ १७ ॥ [क] सन्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम् । [र] रेडस्यग्निष्ट्वा श्री-
णात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या ऊष्मणो व्यथिष-
त्प्रयुतन्द्वेषः ॥ १८ ॥ घृतङ्घृतपावानः पिबत वसां वसापावानः पिबतान्तरि-

न्तस्य हविर्ऽसि स्वाहा । दिशः प्रदिशऽआदिशो विदिशः उद्दिशो दिग्भ्यः स्वाहा ॥१९॥ ऐन्द्रः प्राणोऽअङ्गेऽअङ्गे निदीध्यदैन्द्रऽउदानोऽअङ्गेऽअङ्गेऽ निधीतः । देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपम्भवाति । देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरो मदन्तु ॥ २० ॥ समुद्रङ्गच्छ स्वाहाऽन्तरिक्षङ्गच्छ स्वाहा देवꣳ सवितारङ्गच्छ स्वाहा । मित्रावरुणौ गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा छन्दांसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यन्नभो गच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनो मे हार्दि यच्छ दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीम्भस्मना पृण स्वाहा ॥ २१ ॥ मापो मौषधीर्हिꣳसीर्द्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च । यदाहुरघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ २२ ॥ हविष्मतीरिमा आपो हविष्माँ२॥ आविवासति । हविष्मान्देवो अध्वरो हविष्माँ२॥ अस्तु सूर्यः ॥ २३ ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीन्द्राग्न्योर्भागधेयी स्थ मित्रावरुणयोर्भागधेयी स्थ विश्वेषां देवानां भागधेयी स्थ । अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ता नो हिन्वन्त्वध्वरम् ॥ २४ ॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥ २५ ॥ सोम राजन्विश्वास्त्वम्प्रजा उपावरोह विश्वास्त्वाम्प्रजा उपावरोहन्तु । शृणोत्वग्निः समिधा हवम्मे शृण्वन्त्वापो धिषणाश्च देवीः । श्रोता ग्रावाणो विदुषो न यज्ञꣳ शृणोतु देवः सविता हवम्मे स्वाहा ॥ २६ ॥ देवीरापो अपान्नपाद्यो वऊर्मिर्हविष्यऽइन्द्रियावान् मदिन्तमः । तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषाम्भाग स्थ स्वाहा ॥ २७ ॥ कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि । समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ २८ ॥ यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः स यन्ता शश्वतीरिषः स्वाहा ॥ २९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे रावासि गभीरमिममध्वरङ्कृधीन्द्राय सुषूतमम् । उत्तमेन पविनोर्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्राभ्या स्थ देवश्रुतस्तर्प्पयत मा ॥३०॥ मनो मे तर्प्पयत वाचम्मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्मे तर्प्पयत श्रोत्रम्मे तर्प्पयतात्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा वितृषन् ॥ ३१ ॥ इन्द्राय त्वा वसुमते रुद्रवतऽइन्द्राय त्वादित्यवत इन्द्राय त्वाभिमातिघ्ने । श्येनाय त्वा सोमभृतेऽग्नये त्वा रायस्पोषदे ॥ ३२ ॥ यत्ते सो

द्विविज्ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमानायोरुराये कृद्ध्यधि दात्रे वोचः ॥ ३२ ॥ श्वात्राः स्थ वृत्रतुरो राधोगूर्त्ताऽअमृतस्य पत्नीः । ता देवीर्देवत्रेमं यज्ञन्नयतोपहूताः सोमस्य पिबत ॥ ३४ ॥ माभेर्मा संविक्थाऽऊर्जं धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जन्दधाथाम् । पाप्मा हतो न सोमः ॥ ३५ ॥ प्रागपागुदगधराक्सर्वतस्त्वा दिशऽआधावन्तु । अम्ब निष्पर समरीर्विदाम् ॥ ३६ ॥ त्वमङ्ग प्रशंᳫंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ३७ ॥

॥ इति षष्ठोऽध्यायः ॥

—→※※←—

# ॥ अथ सप्तमोऽध्यायः ॥



ऋषिः—गोतमः १—६ वसिष्ठः ७ मधुच्छन्दाः ८, ३३ गृत्समदः ९, ३४ त्रिसदस्युः १० मेधातिथिः ११ वत्सारः काश्यपः १२—२३ भरद्वाजः २४, २५ ३९ देवश्रवाः २६—३० विश्वामित्रः ३१, ३५—३८ त्रिशोकः ३२ वत्सः ४० प्रस्कण्वः ४१ कुत्सः ४२ आङ्गिरसः ४३—४८ ।

देवता—प्राणः १ सोमः २, २१ विद्वांसः ३, ४६ मघवा ४ ईश्वरः ५ योगी ६ वायुः ७ इन्द्रवायू ८ मित्रावरुणौ ९, १० अश्विनौ ११ विश्वेदेवाः १२—१७ १९, २२—२४, ३२—३४ प्रजापतिः १८, २९, ३०, ३५—३८, ४०, ४४, ४५ यज्ञः २०, २६ वैश्वानरः २५ यज्ञपतिः २७, २८, इन्द्राग्नी ३१ प्रजासेनापतिः ३९ सूर्यः ४१, ४२ अन्तर्यामी जगदीश्वरः ४३ वरुणः ४७ आत्मा ४८ ।

छन्दः—भुरिगार्ष्यनुष्टुप् १ निचृदार्षीपङ्क्तिः २ विराड्ब्राह्मी जगती ३ आर्ष्युष्णिक् ४ आर्षीपङ्क्तिः ५ भुरिक् त्रिष्टुप् ६ निचृज्जगती ७ आर्षी गायत्री क स्वराड् गायत्री र ८ आर्षी गायत्री क आसुरी गायत्री र ९ ब्राह्मी बृहती १०

ब्राह्मी उष्णिक् ११ निचृदार्षी जगती [क] पाङ्क्तिः [र] १२ निचृदार्षी त्रिष्टुप् [क] प्राजापत्या गायत्री [र] १३ स्वराड् जगती १४ निचृद्ब्राह्म्यनुष्टुप् १५ निचृदार्षी त्रिष्टुप् [क] साम्नी गायत्री [र] १६ स्वराड् ब्राह्मीत्रिष्टुप् १७ निचृत्त्रिष्टुप् [क] प्राजापत्या गायत्री [र] १८ भुरिगार्षी पङ्क्तिः १६ निचृदार्षी जगती २० स्वराड् ब्राह्मीत्रिष्टुप् [क] याजुषी जगती [र] २१ ब्राह्मीत्रिष्टुप् २२ अनुष्टुप् [१] प्राजापत्या अनुष्टुप् [२] स्वराट् साम्न्यनुष्टुप् [३] भुरिगार्ची गायत्री [४] भुरिक् साम्न्यनुष्टुप् [५] २४ आर्षी त्रिष्टुप् [र] याजुष्यनुष्टुप् [क] विराडार्षी बृहती [र] २५ स्वराड् ब्राह्मी बृहती २६ आसुर्य्यनुष्टुप् [१], [२], [६], आसुर्य्युष्णिक् [३], [७], साम्नी गायत्री [४] आसुरी गायत्री [५] २७ ब्राह्मी बृहती २८ आर्ची पङ्क्तिः [क] भुरिक्साम्नी पङ्क्तिः [र] २९ साम्नी गायत्री [१], [३], [४], [५], [११] आसुर्य्यनुष्टुप् [२], [६], [१०], [१२] याजुषी पङ्क्तिः [७], [८] आसुर्य्युष्णिक् [१३] ३० आर्षी त्रिष्टुप् ३१ आर्षी गायत्री [क], आर्च्युष्णिक् [र] ३२ आर्षी गायत्री [क] आर्षी बृहती ३३ आर्ची गायत्री [क] निचृदार्च्युष्णिक् [र] ३४ निचृदार्षी त्रिष्टुप् [क] आर्च्युष्णिक् [र] ३५ विराडार्षीत्रिष्टुप् [१] आर्च्युष्णिक् [२] साम्न्युष्णिक् [३] ३६ निचृदार्षीत्रिष्टुप् प्राजापत्यात्रिष्टुप् [र] ३७, ३८ भुरिक् पङ्क्तिः [क] साम्नी त्रिष्टुप् [र] ३९ आर्षी गायत्री [क] विराडार्षी गायत्री [र] ४० भुरिगार्षी गायत्री ४१ भुरिगार्षी त्रिष्टुप् ४२, ४३, ४४ निचृज्जगती ४५ भुरिगार्षी त्रिष्टुप् ४६ भुरिक् प्राजापत्या जगती [१] स्वराट् प्राजापत्या जगती [२] निचृदार्ची जगती [३] विराडार्षी जगती [४] ४७ आर्च्युष्णिक् ४८ ।

स्वरः—गान्धारः १, १५ पञ्चमः २, ५, २६ निषादः ३, ७, १४, २०, ४५, ४७, ऋषभः ४, ११, ४८ धैवतः ६, १७, १९, २२, २४, ३१, ३७, ३८, ४२—४४, ४६ षड्जः ८, ९, ४०, ४१ मध्यमः १०, २६, २८ निषादः [क], पञ्चमः [र] १२ धैवतः [क] षड्जः [र] १३, १६, १८ धैवतः [क] निषादः [र] २१ गान्धारः [१], [२], [३], [५] षड्जः [४] २३ गान्धारः [क] मध्यमः [र] २५ गान्धारः [१], [२], [४], [५], षड्जः [३], ऋषभः [७], २७ षड्जः [१], [३], [४], [५], [९], [११] गान्धारः [२], [६], [१०], [१२], पञ्चमः [८] ऋषभः [१३] ३० षड्जः [क] ऋषभः [र] ३२, ३४ षड्जः [क] मध्यमः [र] ३३ धैवतः ऋषभः [र] ३५, ३६ पञ्चमः [क] धैवतः [र] ३९ ॥

॥ ओ३म् ॥ वाचस्पतये पवस्व वृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः । देवो देवेभ्यः पवस्व येषाम्भागोऽसि ॥ १ ॥ मधुमतीर्न्न इषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि ॥ २ ॥ स्वाङ्कृतोऽसि

विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवां॑शो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् प्राणाय त्वा व्यानाय त्वा ॥ ३ ॥ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोमम् । उरुष्य राय एषो यजस्व ॥ ४ ॥ अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ॥ ५ ॥ स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य उदानाय त्वा ॥ ६ ॥ आवायो भूष शुचिपा उप नः सहस्रन्ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वा ॥ ७ ॥ [क] इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । [र] उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यान्त्वैष ते योनिः सजोषोभ्यां त्वा ॥ ८ ॥ [क] अयं वाम्मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् । [र] उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥ ९ ॥ राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तान्धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेषते योनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ या वाङ्कशा मधुमत्यश्विना सूनृतावती । तया यज्ञम्मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यान्त्वैष ते योनिर्माध्वीभ्यान्त्वा ॥ ११ ॥ [क] तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्विदम् । प्रतीचीनम्वृजनन्दोहसे धुनिमाशुं जयन्तमनु यासु वर्द्धसे । [र] उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाह्यपमृष्टः शण्डो देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ [क] सुवीरो वीरान् प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् । संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः । [र] शुक्रस्याधिष्ठानमसि ॥ १३ ॥ अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः ॥ १४ ॥ स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमा जुहोत स्वाहा । तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहा याडग्नीत् ॥ १५ ॥ [क] अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाꣳ संगमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति [र] उपयामगृहीतोऽसि मर्काय त्वा ॥ १६ ॥ मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तावेष ते योनिः प्रजाः पाह्यपमृष्टो मर्को देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि ॥ १७ ॥ [क] सुप्रजाः प्रजाः प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् । संजग्मानो दिवा पृथिव्या मन्थी म-

न्थिशोचिषा निरस्तो मर्को [२] मन्थिनोऽधिष्ठानमसि ॥ १८ ॥ ये देवासो दिव्ये कादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ १९ ॥ उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः । पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभि सवनानि पाहि ॥ २० ॥ [क] सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवत इष ऊर्जे पवतेऽद्भ्य ओषधीभ्यः पवते द्यावापृथिवीभ्याम्पवते सुभूताय पवते विश्वेभ्यस्त्वा देवेभ्य [२] एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २१ ॥ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थाव्यं गृह्णामि । यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा देवाव्यं गृह्णामि यज्ञस्यायुषे गृह्णामि ॥ २२ ॥ [१] मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी [२] न्द्राग्निभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी [३] न्द्रावरुणाभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी [४] न्द्राबृहस्पतिभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी [५] न्द्राविष्णुभ्यान्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ २३ ॥ मूर्द्धानन्दिवो अरतिम्पृथिव्या वैश्वानरमृत आजातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ २४ ॥ [क] उपयामगृहीतोऽसि [२] ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा । ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि । अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत् ॥ २५ ॥ यस्ते द्रप्सस्कन्दति यस्ते अꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतꣳ स्वाहा देवानामुत्क्रमणमसि ॥ २६ ॥ [१] प्राणाय मे वर्चोदा वर्चसे पवस्व [२] व्यानाय मे वर्चोदा वर्चसे पवस्वो [३] दानाय मे वर्चोदा वर्चसे पवस्व [४] वाचे मे वर्चोदा वर्चसे पवस्व [५] क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व [६] श्रोत्राय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्याम्मे वर्चोदसौ वर्चसे पवेथाम् ॥ २७ ॥ आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुषे मे वर्चोदा वर्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् ॥ २८ ॥ [क] कोऽसि कतमोऽसि कस्यासि को नामासि । यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम । [२] भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः पोषैः ॥ २९ ॥ [१] उपयामगृहीतोऽसि मधवे त्वो [२] पयामगृहीतोऽसि माधवाय त्वो [३] पयामगृहीतोऽसि शुक्राय त्वो [४] पयामगृहीतोऽसि शुचये त्वो [५] पयामगृहीतोऽसि नभसे त्वो [६] पयामगृहीतोऽसि नभस्याय त्वो [७] पयामगृहीतोऽसीषे

उपयामगृहीतोऽस्यूर्जे त्वोपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय त्वोपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वोपयामगृहीतोऽस्यᳫंहसस्पतये त्वा ॥ ३० ॥ इन्द्राग्नी आगतᳫं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यान्त्वा ॥ ३१ ॥ आघाये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा। उपयामगृहीतोऽस्यग्नीन्द्राभ्यान्त्वैष ते योनिरग्नीन्द्राभ्यान्त्वा ॥ ३२ ॥ ओमासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वाᳫंसो दाशुषः सुतम्। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ३३ ॥ विश्वे देवास आगत शृणुता म इमᳫं हवम् । एदं बर्हिर्निषीदत। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ३४ ॥ इन्द्र मरुत्व इह पाहि सोमं यथा शार्य्याते अपिबः सुतस्य। तव प्रणीती तव शूर शर्म्मन्नाविवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३५ ॥ मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यᳫं शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रᳫं सहोदामिह तᳫं हुवेम। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते। उपयामगृहीतोऽसि मरुतान्त्वौजसे ॥ ३६ ॥ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूँ २॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३७ ॥ मरुत्वाँ २॥ इन्द्र वृषभो रणाय पिबा सोममनुष्वधम्मदाय। आसिञ्चस्व जठरे मध्व ऊर्म्मिं त्वᳫं राजासि प्रतिपत्सुतानाम् । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ३८ ॥ महाँ २॥ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्य्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ३९ ॥ महाँ २॥ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ २॥ इव । स्तोमैर्वत्सस्य वावृधे। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ४० ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यᳫं स्वाहा ॥ ४१ ॥ चित्रन्देवानामुदगादनीकं चक्षुर्म्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षᳫं सूर्य्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४२ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उ-

कि विधेम स्वाहा ॥ ४३ ॥ अयन्नो अग्निर्वरिवस्कृणोत्वयम्मृधः पुर एतु भिन्दन्। अयं वाजाञ्जयतु वाजसातावयथं शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥ ४४ ॥ रूपेण वो रूपमभ्यागान्तुथो वो विश्ववेदा विभजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणा वि स्वः पश्य व्युन्तरिक्षं यतस्व सदस्यैः ॥ ४५ ॥ ब्राह्मणमद्य देयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयथं सुधातुदक्षिणम् । अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ ४६ ॥ [१] अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यम् प्रतिग्रहीत्रे [२] रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्र एधि वयो मह्यम् प्रतिग्रहीत्रे [३] बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्र एधि मयो मह्यम् प्रतिग्रहीत्रे [४] यमाय त्वा वरुणो ददातु सोऽमृतत्वमशीय हयो दात्र एधि मयो मह्यम् प्रतिग्रहीत्रे ॥ ४७ ॥ कोऽदात्कस्मा अदात्कामोऽदात्कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ४८ ॥

॥ इति सप्तमोऽध्यायः ॥



## ॥ अथाष्टमोऽध्यायः ॥

—:o:—

ऋषिः—आङ्गिरसः १–३ कुत्सः ४, ५ भरद्वाजः ६–१४ अत्रिः १५– गोतमः ३१, ३३, ३५ मेधातिथिः ३२ मधुच्छन्दाः ३४ विवस्वान् ३६, वैखानः ३८, ३६ प्रस्कण्वः ४०, ४१, कुसुरुविन्दुः ४२, ४३ शासः ४४– देवाः ४८—५३ वसिष्ठः ५४—६२ कश्यपः ६३ ।

देवता—बृहस्पतिस्सोमः १ गृहपतिः २, ५, ६, १०, १२, १४, १८, २०–२६, ३३–३५, ५३ आदित्यो गृहपतिः ३, ४ सविता गृहपतिः विश्वेदेवा गृहपतयः ८, १७, १६ गृहपतयो विश्वेदेवाः ६, १३ दम्पती २७– परमेश्वरः ३६ सम्राड् माण्डलिकौ राजानौ ३७ राजादयो गृहपतयः ३८,

राजादयो गृहस्थाः ३९ सूर्यः ४१ पत्नीः ४२, ४३ इन्द्रः ४४ ईश्वरसभेशौ राजानौ ४५ विश्वेकर्मेन्द्रः ४६, ४७ प्रजापतयः ४८, ५० विश्वेदेवाःप्रजापतयः ४९ प्रजापतयो गृहस्थाः ५१ प्रजापतिः ५२ परमेष्ठी प्रजापतिः ५४ इन्द्रादयः ५५ विश्वेदेवा गृहस्थाः ५६ विश्वेदेवाः ५७—६१ यज्ञः ६२, ६३ ।

छन्दः—आर्ची पङ्क्तिः १ भुरिक् पङ्क्तिः २ निचृदार्षी पङ्क्तिः ३ निचृज्जगती ४ प्राजापत्या अनुष्टुप् [क] निचृदार्षी जगती [र] ५ निचृदार्षी त्रिष्टुप् ६ विराड् ब्राह्म्यनुष्टुप् ७ प्राजापत्या गायत्री [क] निचृदार्षी बृहती [र] ८ प्राजापत्या गायत्री [उ] आर्ष्युष्णिक् [क] स्वराडार्षी पङ्क्तिः [र] ९ विराड् ब्राह्मी बृहती १० निचृदार्ष्यनुष्टुप् ११ आर्षीपङ्क्तिः १२ साम्न्युष्णिक् [१] निचृत्साम्न्युष्णिक् [२], [३] प्राजापत्योष्णिक् [४] निचृदार्ष्युष्णिक् [५] १३ विराडार्षीत्रिष्टुप् १४, १६, भुरिगार्षी त्रिष्टुप् १५, १९, ३६ स्वराडार्षी त्रिष्टुप् १७, २०, ६२, आर्षी त्रिष्टुप् १८, २४ स्वराडार्ष्युष्णिक् २१ भुरिक् साम्न्युष्णिक् [क] विराडार्ची बृहती [र] २२ याजुष्युष्णिक् [उ] भुरिगार्षी त्रिष्टुप् [क] आसुरी गायत्री [र] २३ भुरिगार्षी पङ्क्तिः २५ स्वराडार्षी बृहती २६ भुरिक् प्राजापत्यानुष्टुप् [क] स्वराडार्षी बृहती [र] २७ साम्न्युष्णिक् [उ] आसुर्य्युष्णिक् [क] प्राजापत्यानुष्टुप् [र] २८ भुरिगार्ष्यनुष्टुप् २९ आर्षीजगती ३० आर्षी गायत्री ३१, ३२ आर्ष्यनुष्टुप् [क] विराडार्ष्युष्णिक् [र] ३३ विराडार्ष्यनुष्टुप् [क], [र] ३४ विराडार्ष्यनुष्टुप् ३५ साम्नी त्रिष्टुप् [क] विराडार्ची त्रिष्टुप् [र] ३७ भुरिक्त्रिपाद्गायत्री [उ] स्वराडार्च्यनुष्टुप् [क] भुरिगार्च्यनुष्टुप् [र] ३८ आर्षीगायत्री [उ], [क] आर्ष्युष्णिक् [र] ३९ आर्षी गायत्री [उ], [क] स्वराडार्षी गायत्री [र] ४० निचृदार्षी गायत्री [क] स्वराडार्षी गायत्री [र] ४१ स्वराड् ब्राह्म्युष्णिक् ४२ आर्षी पङ्क्तिः ४३ भुरिगनुष्टुप् [क] विराडार्षी गायत्री [र] ४४ भुरिक् आर्षी त्रिष्टुप् [क] स्वराडार्ष्यनुष्टुप् [र] ४५ भुरिगार्षी त्रिष्टुप् [क] विराडार्ष्यनुष्टुप् [र] ४६ विराड् ब्राह्मी बृहती ४७ याजुषी त्रिष्टुप् [१], [३], [४], [५] याजुषी जगती [२] साम्नी बृहती [६] ४८ विराट् प्राजापत्या जगती भुरिगार्ष्युष्णिक् [र] ४९ स्वराडार्षी जगती ५० आर्षी जगती ५१ भुरिगार्षी बृहती ५२ आर्ष्यनुष्टुप् [१] आसुर्य्युष्णिक् [२] प्राजापत्या बृहती [३] विराट् प्राजापत्या पङ्क्तिः [४] ५३ साम्न्युष्णिक् ५४ आर्षी पङ्क्तिः ५५ आर्षी बृहती ५६ भुरिक् साम्नी बृहती ५७ भुरिगार्षी जगती ५८ आर्षी बृहती [क] विराडार्षी गायत्री [र] ५९ स्वराट्साम्नी त्रिष्टुप् ६० साम्न्युष्णिक् ६१ स्वराडार्षी गायत्री ६३ ।

स्वरः—पञ्चमः १–३, १२, २५, ४३, ५९ निषादः ४, ५०, ५१, ५ गान्धारः क निषादः र ५ धैवतः ६, १४—२०, २४, ३६, ३७, ६०, ६ गान्धारः ७, ११, २९, ३४, ३५, ४९, षड्जः क मध्यमः र ८ षड्जः उ ऋषभ क पञ्चमः र ९ मध्यमः १०, २६, ३०, ४७, ५२, ५६ ऋषभः १३, ४२, ५४, ६१ ऋषभः क मध्यमः र २१ ऋषभः उ धैवतः क षड्जः र २ गान्धारः क मध्यमः र २७ ऋषभः उ, क गान्धारः र २८ षड्जः ३१, ३२, ४ ४१, ४४, ६३ गान्धारः क ऋषभः र ३३ षड्जः क गान्धारः र ३८ षड्ज ऋषभः र ३९ धैवतः क गान्धारः र ४६ धैवतः १, ३, ४, ५ निषादः २ मध्यम ४८ निषादः क धैवतः र ४९ गान्धारः १ ऋषभः २ मध्यमः ३ पञ्चमः ४ ५ निषादः क षड्जः र ५९ ॥

॥ ओ३म् ॥ उपयामगृहीतोऽस्यादित्येभ्यस्त्वा विष्णं उरुगायैष ते सो स्तथंरक्षस्व मा त्वा दभन् ॥१॥ कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उ पेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वा ॥२॥ कदाचन प्रयु स्युभे निपासि जन्मनी । तुरीयादित्य सवनन्त इन्द्रियमा तस्थावमृतं दिव्यादि भ्यस्त्वा ॥३॥ यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आवोऽर्वा सुमतिर्ववृत्यादथंहोश्चिद्या वरिवो वित्तरासदादित्येभ्यस्त्वा ॥४॥ क विवस्व दित्यैष ते सोमपीथस्तस्मिन् मत्स्व । र श्रदस्मै नरो वचसे दधातन यदाशी दम्पती वाममश्नुतः । पुमान् पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृ ॥ ५ ॥ वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यथं सावीः । वामस्य क्षयस्य देवभूरेरया धिया वामभाजः स्याम ॥ ६ ॥ उपयामगृहीतोऽसि सावित्रो ऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिम्भगा देवाय त्वा सवित्रे ॥ ७ ॥ क उपयामगृहीतोऽसि र सुशर्म्मासि सुप्रतिष्ठानो बृ दुक्षाय नमः विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ८ उ उपयामगृहीतोऽसि क बृहस्पतिसुतस्य देवसोम त इन्द्रोरिन्द्रियावतः । पत्नीव ग्रहाँ२॥ ऋध्यासम् । र अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदुमे पिताभूत् । अह सूर्य्यमुभयतो ददर्शाहन्देवानाम्परमङ्गुहा यत् ॥९॥ अग्ना३ इ पत्नीवन्त्सजूर्दे त्वष्ट्रा सोमम्पिब स्वाहा । प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापते वृष्णो रेतोधसो रेतोधामशीय ॥१०॥ उपयामगृहीतोऽसि हरिरसि हारियोजनो हरि भ्यान्त्वा । हर्य्योर्धाना स्थ सहसोमा इन्द्राय ॥११॥ यस्ते अश्वसनिर्भक्षो यो गो

निस्तस्य त इष्टयजुषस्तुतस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ॥ १२ ॥ देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्या त्मकृतस्यैनसोऽवयजनमस्येनस एनसोऽवयजनमसि । यच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोऽवयजनमसि ॥ १३ ॥ सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमाष्टु तन्वो यद्विलिष्टम् ॥ १४ ॥ समिन्द्र णो मनसा नेषि गोभिः सꣳसूरिभिर्मघवन्त्सꣳस्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा ॥ १५ ॥ सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥ १६ ॥ धाता रातिः सवितेदं जुषन्ताम्प्रजापतिर्निधिपा देवो अग्निः । त्वष्टा विष्णुः प्रजया सꣳरराणा यजमानाय द्रविणन्दधात स्वाहा ॥ १७ ॥ सुगा वो देवाः सदना अकर्म्म य आजग्मेदꣳसवनं जुषाणाः । भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ॥ १८ ॥ याँ२॥ आवह उशतो देव देवाँस्तान् प्रेरय स्वे अग्ने सधस्थे । जक्षिवाꣳसः पपिवाꣳसश्च विश्वे सुं घर्म्मꣳ स्वरातिष्ठतानु स्वाहा ॥ १९ ॥ वयꣳहि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह । ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहा ॥ २० ॥ देवा गातुविदो गातुं वित्वा गातुमित । मनसस्पत इमन्देव यज्ञꣳ स्वाहा वाते धाः ॥ २१ ॥ यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वां योनिङ्गच्छ स्वाहा । एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तञ्जुषस्व स्वाहा ॥ २२ ॥ माहिर्भूर्म्मा पृदाकुः उरुꣳहि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् । नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥ २३ ॥ अग्नेरनीकमप आविवेशापान्नपात् प्रतिरक्षन्नसुर्य्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् स्वाहा ॥ २४ ॥ समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः । यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमो वाके विधेम यत् स्वाहा ॥ २५ ॥ देवीराप एष वो गर्भस्तꣳसुप्रीतꣳसुभृतम्बिभृत । देव सोमैष ते लोकस्तस्मिञ्छञ्च वक्ष्व परि च वक्ष्व ॥ २६ ॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि देवानाꣳसमिदसि ॥ २७ ॥ एजतु दशमास्यो गर्भो जरायुणा सह । यथा यं वायुरेजति यथा समुद्र एजति । एवायं दशमास्यो अस्रज्जरायुणा सह ॥ २८ ॥ यस्यै ते यज्ञियो गर्भो यस्यै

योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्य तम्मात्रा समजीगमॅ स्वाहा ॥ २९ ॥ पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः । एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानु प्रथन्ताॅ स्वाहा ॥ ३० ॥ मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥ ३१ ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥ ३२ ॥ आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनथं सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३३ ॥ युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिञ्चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३४ ॥ इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ३५ ॥ यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया सथंरराणस्त्रीणि ज्योतीथंषि सचते स षोडशी ॥ ३६ ॥ इन्द्रश्च सम्राड् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरहमनु भक्षं भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ॥ ३७ ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिम्मयि पोषम् । उपयामगृहीतोऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चसे । अग्ने वर्चस्विन्वर्चस्वाँ स्त्वन्देवेष्वसि वर्चस्वानहम्मनुष्येषु भूयासम् ॥ ३८ ॥ उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे । इन्द्रौजिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोऽहम्मनुष्येषु भूयासम् ॥ ३९ ॥ अदृश्रमस्य केतवो वि रश्मयो जनाँ२॥ अनु भ्राजन्तो अग्नयो यथा । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय । सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहम्मनुष्येषु भूयासम् ॥ ४० ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ॥ ४१ ॥ आ जिघ्र कलशम्मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्त्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः ॥ ४२ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति । एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् ॥ ४३ ॥ वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ२॥ अभिदासत्य

रश्मया तमः । [२] उपयामगृहीतोऽसीन्द्राय त्वा त्रिमृधं एष ते योनिरिन्द्राय त्वा त्रिमृधे ॥ ४४ ॥ [क] वाचस्पतिंविश्वकर्म्माणमूतये मनोजुवं वाजे अद्या हुवेम । सनो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा । [२] उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण एष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे ॥ ४५ ॥ [क] विश्वकर्म्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । [२] उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्म्मण एष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे ॥ ४६ ॥ उपयामगृहीतोऽस्यग्नये त्वा गायत्रच्छन्दसङ्गृह्णामीन्द्राय त्वा त्रिष्टुप्छन्दसं गृह्णामि विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेऽभिगरः ॥ ४७ ॥ [१] व्रेशीनां त्वा पत्मन्ना धूनोमि । [२] कुकूननानान्त्वा पत्मन्ना धूनोमि । [३] भन्दनानान्त्वा पत्मन्ना धूनोमि । [४] मदिन्तमानान्त्वा पत्मन्ना धूनोमि । [५] मधुन्तमानां त्वा पत्मन्ना धूनोमि । [६] शुक्रं त्वा शुक्र आधूनोम्यन्हो रूपे सूर्यस्य रश्मिषु ॥ ४८ ॥ [क] ककुभꣳ रूपं वृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगाः । [२] यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामि तस्मै ते सोम सोमाय स्वाहा ॥ ४९ ॥ उशिक् त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीहि ॥ ५० ॥ इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा । उपसृजन्धरुणम्मात्रे धरुणो मातरं धयन् । रायस्पोषमस्मासु दीधरत् स्वाहा ॥ ५१ ॥ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम । दिवं पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥५२॥ [१]युवन्तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तन्तमिद्धतं वज्रेण तन्तमिद्धतम् । [२] दूरे चत्ताय छन्त्सद् गहनं यदिनक्षत् । [३]अस्माकꣳ शत्रून् परि शूर विश्वतो दर्म्मा दर्षीष्ट विश्वतः । [४] भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः ॥५३॥ परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः । सविता सन्यां विश्वकर्म्मा दीक्षायाम्पूषा सोम क्रयण्याम् ॥५४॥ इन्द्रश्च मरुतश्च क्रयायोपोत्थितोऽसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्ट ऊरावासन्नो विष्णुर्नरन्धिषः ॥५५॥ प्रोह्यमाणः सोम आगतो वरुण आसन्द्यामासन्नोऽग्निराग्नीध्र इन्द्रो हविर्द्धानेऽथर्वोपावह्रियमाणः ॥ ५६ ॥ विश्वे देवा अꣳशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो विष्णुः सम्भ्रियमाणो वायुः पूयमानः शुक्रः पूतः । शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः ॥ ५७ ॥ विश्वे देवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः

प्रतिख्यातो भक्षो भक्षयमाणः पितरो नाराशꣳसाः ॥ ५८ ॥ सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा स्कभिता रजाꣳसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥ ५९ ॥ देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन् पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कं च लोकमगन्यज्ञस्ततो मे भद्रमभूत् ॥ ६० ॥ चतुस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते । तेषां छिन्नꣳसम्वेतद्दधामि स्वाहा घर्मो अप्येतु देवान् ॥ ६१ ॥ यज्ञस्य दोहो विततः पुरुत्रा सो अष्टधा दिवमन्वाततान । स यज्ञ धुक्ष्व महि मे प्रजायाꣳ रायस्पोषं विश्वमायुरशीय स्वाहा ॥ ६२ ॥ आ पवस्व हिरण्यवदश्ववत्सोम वीरवत् । वाजं गोमन्तमा भर स्वाहा ॥ ६३ ॥

॥ इत्यष्टमोऽध्यायः ॥



## ॥ अथ नवमोऽध्यायः ॥



ऋषिः—इन्द्राबृहस्पती १ बृहस्पतिः २—१३ दधिक्रावा १४, १५ वसिष्ठः १६, १८—२५ नाभानेदिष्ठः १७ तापसः २६—३४ वरुणः ३५, ३६ देववातः ३७—४० ।

देवता—सविता १, ५, १३ इन्द्रः २, ३ राजधर्मराजादयः ४ अश्वः ६ सेनापतिः ७ प्रजापतिः ८, १९, २० २३—२५ वीरः ९ इन्द्राबृहस्पतिः १०—१२ बृहस्पतिः १४—१८ यज्ञः २१ देशः २२ सोमाग्न्यादित्यविष्णुसूर्यबृहस्पतयः २६ अर्य्यमादिमन्त्रोक्ताः २७, २९ अग्निः २८, ३७ सम्राट् ३० अग्न्यादयो मन्त्रोक्ताः ३१ पूषादयो मन्त्रोक्ताः ३२ मित्रादयो मन्त्रोक्ताः ३३ वस्वादयो मन्त्रोक्ताः ३४ विश्वेदेवाः ३५, ३६ रक्षोघ्नः ३८, ३९ यजमानः ४० ।

छन्दः—स्वराडार्षी त्रिष्टुप् १ आर्षीपङ्क्तिः [क] विकृतिः [र] २ अतिशक्करीः ३ भूरिक्कृतिः ४ भुरिगष्टिः ५ भुरिग्जगती ६, २४ भुरिगुष्णिक् ७ भूरिक्त्रिष्टुप् ८ धृतिः ९ विराडुत्कृतिः १० जगती ११, १३—१५, १७, ३०, स्वराडतिधृतिः १२ भुरिक् पङ्क्तिः १६ निचृत् त्रिष्टुप् १८ निचृद्धृतिः १९ भुरिक्कृतिः २० अत्यष्टिः २१ निचृदत्यष्टिः २२ स्वराट् त्रिष्टुप् २३, २५ अनुष्टुप् २६ स्वराडनुष्टुप् २७ भुरिगनुष्टुप् २८ भुरिगार्षीगायत्री २९ अत्यष्टिः ३१ कृतिः ३२, ३३ निचृज्जगती [क] निचृद्धृतिः [र] ३४ निचृदुत्कृतिः ३५ विकृतिः ३६ निचृदनुष्टुप् ३७ स्वराड्ब्राह्मी बृहती ३८ अतिजगती ३९ भुरिग् ब्राह्मी त्रिष्टुप् ४० ।

स्वरः—धैवतः १, ८, २३, २५, ४० पञ्चमः [क] मध्यमः [र] २ पञ्चमः ३, १६ निषादः ४, ६, ११, १३—१५, १७, १८, २०, २४, ३०, ३२, ३३, ३९ मध्यमः ५, ३६, ३८ ऋषभः ७, ९, १९ षड्जः १०, १२, २९, ३५ गान्धारः २१, २२, २६—२८, ३१, ३७ निषादः [क] ऋषभः [र] ३४ ॥

॥ ओ३म् ॥ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजन्नः स्वदतु स्वाहा ॥ १ ॥ [क] ध्रुवसदन्त्वा नृषदम्मनः सदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । [र] अप्सुषदं त्वा घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् पृथिविसदं त्वाऽन्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ २ ॥ अपा१ँ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् । अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ३ ॥ ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् । तेषां विशिप्रियाणां वोऽहमिषमूर्जꣳ समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् । सम्पृचौ स्थः सम्मा भद्रेण पृङ्क्तं विपृचौ स्थो वि मा पाप्मना पृङ्क्तम् ॥ ४ ॥ इन्द्रस्य वज्रोऽसि वाजसास्त्वयाऽयं वाजꣳ सेत् । वाजस्य नु प्रसवे मातरम्महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यान्नो देवः सविता धर्म साविषत् ॥ ५ ॥ अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिनः । देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेत् ॥ ६ ॥ वातो वा मनो वा गन्धर्वाः सप्तविꣳशतिः । ते अग्रेऽश्वमयुञ्जँस्ते अस्मिन् जवमादधुः ॥ ७ ॥ वातरꣳहा भव वाजिन् युज्यमानः

इन्द्रस्येव दक्षिणः श्रियैधि । युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवन्दधातु ॥ ८ ॥ जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते । तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुः । वाजिनो वाजजितो वाजꣳ सरिष्यन्तो बृहस्पतेर्भागमवजिघ्रत ॥ ९ ॥ देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳ रुहेयम् । देवस्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयम् । देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहम् । देवस्याहꣳ सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम् ॥ १० ॥ बृहस्पते वाजं जय बृहस्पतये वाचं वदत बृहस्पतिं वाजं जापयत । इन्द्र वाजं जयेन्द्राय वाचं वदतेन्द्रं वाजं जापयत ॥ ११ ॥ एषा वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम् । एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं वाजं वनस्पतयो विमुच्यध्वम् ॥ १२ ॥ देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो वाजं जेषम् । वाजिनो वाजजितोऽध्वन स्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छत ॥ १३ ॥ एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । क्रतुं दधिक्रा अनु सꣳसनिष्यदत्पथामङ्काꣳस्यन्वापनीफणत् स्वाहा ॥ १४ ॥ उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः । श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ॥ १५ ॥ शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः ॥ १६ ॥ ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः । सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे ॥ १७ ॥ वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वन्तृप्ता यात पथिभिर्देवयानैः ॥ १८ ॥ आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरामातरा चा मा सोमो अमृतत्वेन गम्यात् । वाजिनो वाजजितो वाजꣳ ससृवाꣳसो बृहस्पतेर्भागमवजिघ्रत निमृजानाः ॥ १९ ॥ आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहाऽऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहा ॥ २० ॥ आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् । प्रजापतेः प्रजा अभूम स्वर्देवा

अगन्मामृता अभूम ॥ २१ ॥ अस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चांᳬसि सन्तु वः । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या इयन्ते राड्यन्तासि यमनो ध्रुवोऽसि धरुणः । कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा ॥ २२ ॥ वाजस्येमं प्रसवः सुषुवेऽग्रे सोमᳬ राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु वयᳬ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ २३ ॥ वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् । अदित्सन्तं दापयति प्रजानन्त्स नो रयिं सर्ववीरं नियच्छतु स्वाहा ॥ २४ ॥ वाजस्य नु प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः । सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं वर्धयमानो अस्मे स्वाहा ॥ २५ ॥ सोमᳬ राजानमवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुᳬ सूर्यं ब्रह्माणं च बृहस्पतिᳬ स्वाहा ॥ २६ ॥ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुᳬ सरस्वतीᳬ सवितारं च वाजिनᳬ स्वाहा ॥ २७ ॥ अग्ने अच्छा वदेह नः प्रति नः सुमना भव । प्र नो यच्छ सहस्रजित्त्वᳬ हि धनदा असि स्वाहा ॥ २८ ॥ प्र नो यच्छत्वर्य्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहा ॥ २९ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रियें दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ ३० ॥ अग्निरेकाक्षरेण प्राणमुदजयत् तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयतान्तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषᳬ सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम् ॥ ३१ ॥ पूषा पञ्चाक्षरेण पञ्च दिश उदजयत्ता उज्जेषᳬ सविता षडक्षरेण षड् ऋतूनुदजयत्तानुज्जेषम् । मरुतः सप्ताक्षरेण सप्तग्राम्यान् पशूनुदजयँस्तानुज्जेषम् । बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ॥ ३२ ॥ मित्रो नवाक्षरेण त्रिवृतᳬ स्तोममुदजयत् तमुज्जेषम् । वरुणो दशाक्षरेण विराजमुदजयत्तामुज्जेषमिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयत्तामुज्जेषम् । विश्वे देवा द्वादशाक्षरेण जगतीमुदजयँस्तामुज्जेषम् ॥ ३३ ॥ [क] वसवस्त्रयोदशाक्षरेण त्रयोदशᳬ स्तोममुदजयँस्तमुज्जेषम् । रुद्राश्चतुर्दशाक्षरेण चतुर्दशᳬ स्तोममुदजयँस्तमुज्जेषम् । [र] आदित्याः पञ्चदशाक्षरेण पञ्चदशᳬ स्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेण षोडशᳬ स्तोममुदजयत्तमुज्जेषम् । प्रजापतिः सप्तदशाक्षरेण सप्तदशᳬ स्तोममुदजयत्तमुज्जेषम् ॥ ३४ ॥ एष ते निर्ऋते भागस्तं जुषस्व स्वाहाऽग्निनेत्रेभ्यो देवेभ्यः पुरः सद्भ्यः स्वाहा यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा

देवेभ्यं उत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यं उपरिसद्भ्यो दुवस्वद्भ्यः स्वा ॥ ३५ ॥ ये देवा अग्निनेत्राः पुरः सदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षि सदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा। ये देवा त्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरि दुवस्वन्तस्तेभ्यः स्वाहा ॥ ३६ ॥ अग्ने सहस्व पृतना अभिमातीरपास्य। दु स्तरन्नरातीर्वर्चो धा यज्ञवाहसि ॥ ३७ ॥ देवस्यं त्वा सवितुः प्रसवेऽश्विनो भ्यां पूष्णो हस्ताभ्याम्। उपांशोर्वीर्येण जुहोमि हतꣳ रक्षः स्वाहा। र त्वा वधायावधिष्म रक्षोऽवधिष्मामुमसौ हतः ॥ ३८ ॥ सविता त्वा सवानां वतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाम्। बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥ ३९ ॥ इमं देवा असपत्नꣳ सुवध्वं क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममुष्य पुत्रम पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा ॥ ४० ॥

॥ इति नवमोऽध्यायः ॥

—:0:—

## ॥ दशमोऽध्यायः ॥

—:0:—

ऋषिः—वरुणः १—१७ देववातः १८—२३ वामदेवः २४—२६ शेपः २७—३४।

देवता—आपः १, ६ वृषा २ अपांपतिः ३ सूर्यादयो मन्त्रोक्ताः ४ ग्न्यादयो मन्त्रोक्ताः ५, २३ वरुणः ७, २७ यजमानः ८, १०—१४, १९, २८ प्रजापतिः ९, २० परमात्मा १५ मित्रावरुणौ १६ क्षत्रपतिः १७, ३१, ३२ इन्द्रः २२ सूर्यः २४, २५ आसन्दी राजपत्नी २६ अग्निः २९ वित्रादिमन्त्रोक्ताः ३० अश्विनौ ३३, ३४।

छन्दः—निचृदार्षी त्रिष्टुप् १, २२ स्वराड्ब्राह्मी पङ्क्तिः २ अभिकृतिः[क] निचृज्जगती [२] ३ जगती [१] स्वराट् पङ्क्तिः [२] स्वराड् विकृतिः [३] स्वराट्संकृतिः [क] भुरिगाकृतिः [४] भुरिक् त्रिष्टुप् [५] ४ भुरिग् धृतिः ५ स्वराड् ब्राह्मी बृहती ६ विराडार्षी त्रिष्टुप् ७ स्वराट् कृतिः ८ भुरिगष्टिः ९ विराडार्षी पङ्क्तिः १० आर्ची पङ्क्तिः ११, १३ निचृदार्ष्यनुष्टुप् १२ भुरिग् जगती १४ निचृदार्षी पङ्क्तिः १५ स्वराडार्षी जगती १६ आर्षी पङ्क्तिः १७ स्वराड् ब्राह्मी त्रिष्टुप् १८, ३० विराड् ब्राह्मी त्रिष्टुप् १९ स्वराडतिधृतिः २० भुरिग् ब्राह्मी बृहती २१ जगती २३ भुरिगार्षी जगती २४ आर्षी जगती २५ भुरिगनुष्टुप् २६ पिपीलिका मध्या विराड् गायत्री २७ धृतिः २८ स्वराडार्षी जगती २९ आर्षीत्रिष्टुप् ३१ निचृद् ब्राह्मी त्रिष्टुप् ३२ निचृदनुष्टुप् ३३ भुरिक् पङ्क्तिः ३४ ।

स्वरः—धैवतः १, ७, १८, १९, २२, ३०—३२ पञ्चमः २, १०, ११, १३, १५, १७, ३४ ऋषभः [क] निषादः [२] ३ निषादः [१] पञ्चमः [२], [४] मध्यमः [३] गान्धारः [क] धैवतः [५] ४ ऋषभः ५, २८ मध्यमः ६, ९, २१ निषादः ८, १४, १६, २३–२५, २९ गान्धारः १२, २६, ३३ षड्जः २०, २७ ॥

॥ ओ३म् ॥ अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १ ॥ वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा । वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि । वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा । वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ २ ॥ अर्थेत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वती स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापाम्पतिरसि राष्ट्रदा राष्ट्रम्मे [२] देहि स्वाहाऽपाम्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपाङ्गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि ॥ ३ ॥ [१]सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त [२] सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त [३] व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा [क] व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त [३] शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त

स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त शक्वरी स्थ राष्ट्रदा राष्ट्र
दत्त स्वाहा ४ शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्र
दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृतस्थ राष्ट्रदा रा
मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्र
राष्ट्रममुष्मै दत्त । ५ मधुमतीर्मधुमतीभिः पृच्यन्ताम्महि क्षत्रं क्षत्रियाय वन्वा
अनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥ ४ ॥ सोमस्य त्वि
षिरसि तवेव मे त्विषिर्भूयात् । अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा स
स्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोका
स्वाहांशाय स्वाहा भगाय स्वाहार्य्यम्णे स्वाहा ॥ ५ ॥ पवित्रे स्थो वैष्णव्यौ स
तुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । अनिभृष्टमसि वा
बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ॥ ६ ॥ सधमादो द्युम्नि
राप एता अनाधृष्टा अपस्यो वसानाः । पस्त्यासु चक्रे वरुणः सधस्थमपां
शुर्मातृतमास्वन्तः ॥ ७ ॥ क्षत्रस्योल्वमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिर
क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं व
दृवासि रुजासि क्षुमासि । पातैनं प्राञ्चम्पातैनं प्रत्यञ्चम्पातैनं तिर्यञ्चन्दि
पात ॥ ८ ॥ आविर्मर्य्या आवित्तो अग्निर्गृहपतिरावित्त इन्द्रो वृद्धश्रवा आ
त्तौ मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्ववेदा आवित्ते द्यावापृथिवी विश्व
म्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त
वतु रथन्तरꣳ साम त्रिवृत् स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ॥ १० ॥ दक्षि
मारोह त्रिष्टुप् त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ॥
प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रवि
॥ १२ ॥ उदीचीमारोहानुष्टुप् त्वावतु वैराजꣳसामैकविꣳ शस्तोमः शरदृतुः फ
द्रविणम् ॥ १३ ॥ ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रि
शौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणम्प्रत्यस्तन्नमुचेः शिरः ॥ १४ ॥ सोम
त्विषिरसि तवेव मे त्विषिर्भूयात् । मृत्योः पाह्योजोऽसि सहोस्यमृतमसि ॥ १
हिरण्यरूपा उषसो विरोक उभाविन्द्रा उदिथः सूर्यश्च । आरोहतं वरुण मि
गर्त्तं ततश्चक्षाथामदितिं दितिं च । मित्रोऽसि वरुणोऽसि ॥ १६ ॥ सोमस्य त
द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण । क्षत्राणां क्षत्रप
रेध्यति दिद्यून् पाहि ॥ १७ ॥ इमन्देवा असपत्नꣳ सुवध्वं महते क्षत्राय म

ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳲ राजा ॥ १८ ॥ प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः । ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणाः । विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि ॥ १९ ॥ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पिताऽसावस्य पिता वयᳲ स्याम पतयो रयीणाᳲ स्वाहा । रुद्र यत्ते क्रिवि परं नाम तस्मिन् हुतमस्यमेष्टमसि स्वाहा ॥ २० ॥ इन्द्रस्य वज्रोऽसि मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि । अव्यथायै त्वा स्वधायै त्वाऽरिष्टो अर्जुनो मरुतां प्रसवेन जयापाम मनसा समिन्द्रियेण ॥ २१ ॥ मा त इन्द्र ते वयं तुराषाडयुक्तासो अब्रह्मता वि दसाम । तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान् ॥ २२ ॥ अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहा मरुतामोजसे स्वाहेन्द्रस्येन्द्रियाय स्वाहा । पृथिवि मातर्मा मा हिᳲसीर्मो अहं त्वाम् ॥ २३ ॥ हᳲसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्बृहत् ॥ २४ ॥ इयदस्यायुरस्यायुर्मयि धेहि युङ्ङसि वर्चोऽसि वर्चो मयि धेह्यूर्गस्यूर्जं मयि धेहि । इन्द्रस्य वां वीर्यकृतो बाहू अभ्युपावहरामि ॥ २५ ॥ स्योनासि सुषदासि क्षत्रस्य योनिरसि । स्योनामा सीद सुषदामा सीद क्षत्रस्य योनिमा सीद ॥ २६ ॥ नि षसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ २७ ॥ अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ताम्ब्रह्मँस्त्वं ब्रह्मासि सवितासि सत्यप्रसवो वरुणोऽसि सत्यौजा इन्द्रोऽसि विशौजा रुद्रोऽसि सुशेवः । बहुकार श्रेयस्कर भूयस्करेन्द्रस्य वज्रोऽसि तेन मे रध्य ॥ २८ ॥ अग्निः पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु स्वाहा । स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वᳲ सजातानां मध्यमेष्ठ्याय ॥ २९ ॥ सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुना दशम्या देवतया प्रसूतः प्र सर्पामि ॥ ३० ॥ अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व । वायुः पूतः पवित्रेण प्रत्यङ्क्सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ॥ ३१ ॥ कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ ३२ ॥ युवᳲ सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती

इन्द्रं कर्मस्वावतम् ॥ ३३ ॥ पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दुꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ३४ ॥

॥ इति दशमोऽध्यायः ॥



# ॥ अथ एकादशोऽध्यायः ॥

ऋषिः—प्रजापतिः १—११ नाभानेदिष्ठः १२ कुश्रिः १३ शुनःशे... १४—१६ पुरोधाः १७ मयोभूः १८—२२ गृत्समदः २३, २४, २७-३१ ... सोमकः २५ पायुः २६ भारद्वाजः ३२—३४ देवश्रवो देववातः ३५ ... ३७ सिन्धुद्वीपः ३८—४०, ५०—६१ विश्वमनाः ४१ कण्वः ४२ त्रितः ... ४४, ४६–४८ चित्रः ४५ उत्कीलः ४६ विश्वामित्रः ६२–६६ आत्रेयः ६७-... सोमाहुतिः ७० विरूपः ७१ वारुणिः ७२ जमदग्निः ७३, ७४ नाभानं... ७५–८३ ।

देवता—सविता १—११, ६३, ६७ वाजी १२, १३ क्षत्रपतिः १४, ... गणपतिः १५ अग्निः १६—१९, २४—२६, ३२–३४, ३६, ३७, ४०-... ७०–७८ द्रविणोदाः २१, २२ प्रजापतिः २३ दम्पती ३० जायापती ३१ ... ३५ आपः ३८, ५०—५२ वायुः ३९ मित्रः ५३, ६२ रुद्रः ५४ सिनीवा... ५५ अदितिः ५६, ५७, ५९ वसुरुद्रादित्यविश्वेदेवाः ५८ वस्वादयो मन्त्रो... ६० आदित्यादयो लिङ्गोक्ताः ६१ वस्वादयो लिङ्गोक्ताः ६५ अग्न्यादयो मन्त्रो... ६६ अम्बा ६८, ६९ सेनापतिः ७९ अध्यापकोपदेशकौ ८० पुरोहितयज... ८१ सभापतिर्यजमानः ८२ यजमानपुरोहितौ ८३ ।

छन्दः—विराडार्ष्यनुष्टुप् १, ३० शङ्कुमती गायत्री २ निचृदनुष्टु... १८, १९, २१, ७३, ७९ जगती ४ विराडार्षी त्रिष्टुप् ५, ६ आर्षी त्रिष्टु... २३, ५९ शक्वरी ८ भुरिगतिशक्वरी ९ भुरिगनुष्टुप् १०, ४०, ४१, ४८, ७७...

११ आस्तारपङ्क्तिः १२ गायत्री १३, १४, ५०—५२, ६८ आर्षी जगती १९ निचृदार्षी त्रिष्टुप् १६, १७, २२, निचृदार्षी बृहती २०, ३७ आर्षी पङ्क्तिः २१, २४ निचृद्गायत्री २५, ३३, ३४, ६२ अनुष्टुप् २६, ५४, ६४, ६७, ८० पङ्क्तिः २७ भुरिक् प्रकृतिः २८ स्वराट् पङ्क्तिः २९ त्रिष्टुप् ३२, ३६, ४९, ६६ निचृत्त्रिष्टुप् ३५ न्यङ्कुसारिणी बृहती ३८ विराट् त्रिष्टुप् ३९, ४३, ७५ उपरिष्टाद् बृहती ४२, ५३, ८३ विराडनुष्टुप् ४४, ५५, ५६, ७४, ८२ विराट् पथ्या बृहती ४५ ब्राह्मी बृहती ४६ विराट् ब्राह्मी त्रिष्टुप् ४७, ६६ भुरिग् बृहती ५७, ६३ उत्कृती क, र ५८ स्वराट् संकृतिः ६० भुरिक् कृतिः क प्रकृतिः ६१ धृतिः ६५ विराड् गायत्री ७०, ७१ भुरिगुष्णिक् ७२, ७८ स्वराडार्षी त्रिष्टुप् ७६ निचृदार्षी पङ्क्तिः ८१ ।

स्वरः—गान्धारः १, ३, १०, १८, १६, २६, ३०, ३१, ४०, ४१, ४४, ४८, ५४—५६, ६०, ६४, ६७, ७३, ७४, ७७, ७९, ८०, ८२ षड्जः २, १३, १४, २५, ३३, ३४, ५०—५२, ५८, ६२, ६५, ६८, ७०, ७१, निषादः ४, १५, धैवतः ५—८, १६, १७, २२, २३, २८, ३२, ३५, ३६, ३९, ४३, ४७, ४९, ५९, ६६, ६९, ७५, ७६ पञ्चमः ९, ११, १२, २१, २४, २७, २९, ८१ मध्यमः २०, ३७, ३८, ४२, ४५, ४६, ५३, ५७, ६३, ८३, निषादः क, धैवतः र ६१ ऋषभः ७२, ७८ ॥

॥ ओ३म् ॥ युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥ युक्तेन मनसा वयं देवस्य सवितुः सवे । स्वर्ग्याय शक्त्या ॥ २ ॥ युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः । शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥ यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमोजसा । यः पार्थिवानि विममे स एतशो रजांसि देवः सविता महित्वना ॥ ६ ॥ देव सवितः प्र सुव यज्ञं प्र सुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥ ७ ॥ इमं नो देव सवितर्यज्ञं प्रणय देवाव्यꣳ सखिविदꣳ सत्राजितं धनजितꣳ स्वर्जितम् । ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्त्तनि

स्वाहा ॥ ८ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्
आददे गायत्रेण छन्दसाङ्गिरस्वत्पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर
त्रैष्टुभेन छन्दसाङ्गिरस्वत् ॥ ९ ॥ अभ्रिरसि नार्यसि त्वया वयमग्निꣳ शके
खनितुꣳ सधस्थ आ । जागतेन छन्दसाङ्गिरस्वत् ॥ १० ॥ हस्त आधाय सवि
बिभ्रदभ्रिꣳ हिरण्ययीम् । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरदानुष्टु
छन्दसाङ्गिरस्वत् ॥ ११ ॥ प्रतूर्त्तं वाजिन्ना द्रव वरिष्ठामनु संवतम् । दिवि
जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित् ॥ १२ ॥ युञ्जाथाꣳ
रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम् ॥ १३ ॥ योगेयोगे
वस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥ १४ ॥ प्र तूर्वन्नेह्यवक्रामन्नशस्ती
रुद्रस्य गाणपत्यं मयोभूरेहि । उर्वन्तरिक्षं वीहि स्वस्तिगव्यूतिरभयानि कृ
पूष्णा सयुजा सह ॥ १५ ॥ पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरा
पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्नि
सामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्या
पृथिवी आततन्थ ॥ १७ ॥ आगत्य वाज्यध्वानꣳ सर्वा मृधो वि धूनुते ।
ग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते ॥ १८ ॥ आक्रम्य वाजिन् पृथि
मग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं वयम् ॥ १
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः । विख्याय चक्षुषा
मभितिष्ठ पृतन्यतः ॥ २० ॥ उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणो
वाजिन् । वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥ २
उदक्रमीद् द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतं पृथिव्याम् । ततः खनेम
प्रतीकमग्निꣳ स्वो रुहाणा अधि नाकमुत्तमम् ॥ २२ ॥ आ त्वा जिघर्मि मन
घृतेन प्रतिक्षियन्तं भुवनानि विश्वा । पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठम
भसं दृशानम् ॥ २३ ॥ आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जु
मर्यश्री स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः ॥ २४ ॥ परि वाज
कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ २५ ॥ परि त्वाग्ने पुरं वयं
ꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २६ ॥ त्व
द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं
नृपते जायसे शुचिः ॥ २७ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पू
हस्ताभ्याम् । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामि । ज्योति

त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् । शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत् खनामः ॥ २८ ॥ अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् । वर्धमानो महाँ२॥ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व ॥२९॥ शर्म च स्थो वर्म च स्थोऽछिद्रे बहुले उभे । व्यचस्वती संवसाथां भृतमग्निं पुरीष्यम् ॥ ३० ॥ संवसाथाᳬ स्वर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने । त्वामग्ने पुष्करादध्यथर्वा निरमथन्त । मूर्ध्नो विश्वस्य वाघतः ॥ ३२ ॥ तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम् ॥ ३३ ॥ तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयᳬ रणेरणे ॥ ३४ ॥ सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञᳬ सुकृतस्य योनौ । देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥ ३५ ॥ नि होता होतृषदने विदानस्त्वेषो दीदिवाँ२॥ असदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥३६॥ सᳬ सीदस्व महाँ२॥ असि शोचस्व देववीतमः । विधूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ ३७ ॥ अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ ३८ ॥ सन्ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् । यो देवानां चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ॥३९॥ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः । वासो अग्ने विश्वरूपᳬ संव्ययस्व विभावसो ॥ ४० ॥ उदु तिष्ठ स्वध्वरावा नो देव्या धिया । दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥ ४१ ॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ४२ ॥ स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमांस्यक्तून् प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ ४३ ॥ स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥४४॥ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि शोचीर्मान्तरिक्षं मा वनस्पतीन् ॥ ४५ ॥ प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा । वृषाग्निं वृषणं भरन्नपां गर्भᳬ समुद्रियम् । अग्न आयाहि वीतये ॥ ४६ ॥ ऋतᳬ सत्यमृतᳬ सत्यमग्निं पुरीष्यमङ्गिरस्वद्भरामः । ओषधयः प्रतिमोदध्वमग्निमेतᳬ शिवमायन्तमभ्यत्र युष्माः । व्यस्यन् विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥ ४७ ॥ ओषधयः प्रति गृभ्णीत

पुष्पवतीः सुपिप्पलाः । अयं वो गर्भ ऋत्वियः पूत्नꣳ सधस्थमासदत् ॥ ४८
विपाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः सुशर्मणो बृहतः शर्म
स्यामग्नेरहꣳ सुहवस्य प्रणीतौ ॥ ४९ ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधात
महे रणाय चक्षसे ॥ ५० ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरि
मातरः ॥ ५१ ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा
नः ॥ ५२ ॥ मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जात
वेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः ॥ ५३ ॥ रुद्राः सꣳसृज्य पृथि
बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥ ५४ ॥ सꣳसृ
वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु त
॥ ५५ ॥ सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्यो
दधातु हस्तयोः ॥ ५६ ॥ उखां कृणोतु शक्त्या बाहुभ्यामदितिर्धिया । मा
पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ मखस्य शिरोऽसि ॥ ५७ ॥ [क] वसवस्त्
कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वद्ध्रुवासि पृथिव्यसि धारया मयि प्रजाꣳ रायस्
पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाय रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्द
साऽङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्य
सजातान्यजमानायाऽऽदित्यास्त्वा [र] कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद्ध्रुवासि द्यौ
रसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमान
विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवासि दिशोऽ
धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय ॥ ५८
अदित्यै रास्नास्यदितिष्टे बिलं गृभ्णातु । कृत्वाय सा महीमुखां मृन्मयीं यो
मग्नये । पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ॥ ५९ ॥ वसवस्त्वा धूपयन्तु गा
यत्रेण छन्दसाङ्गिरस्वद् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्
धूपयन्तु जागतेन छन्दसाङ्गिरस्वत् । विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टु
छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ६०
[क] अदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववट दे
वानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे । धिष
स्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वदभीन्धताम् [र] उखे व
त्रीष्ट्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे ऽग्नास्त्वा दे
वीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे जनयस्त्वा छिन्नपत्रा

वीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥ मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ६२ ॥ देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या । अव्यथमाना पृथिव्यामाशा दिश आपृण ॥ ६३ ॥ उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् । मित्रैतां त उखां परि ददाम्यभित्त्या एषा मा भेदि ॥ ६४ ॥ वसवस्त्वा छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वा छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आछृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ६५ ॥ आकूतिमग्निम्प्रयुजꣳ स्वाहा मनो मेधामग्निम्प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निम्प्रयुजꣳ स्वाहा वाचो विधृतिमग्निम्प्रयुजꣳ स्वाहा । प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा ॥ ६६ ॥ विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ६७ ॥ मा सु भित्था मा सु रिषोऽम्ब धृष्णु वीरयस्व सु । अग्निश्चेदं करिष्यथः ॥ ६८ ॥ दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि । जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥ ६९ ॥ द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥ ७० ॥ परस्या अधि संवतोऽवराँ २॥ अभ्यातर । यत्राहमस्मि ताँ २॥ अव ॥ ७१ ॥ परमस्याः परावतो रोहिदश्व इहा गहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः ॥ ७२ ॥ यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ७३ ॥ यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥ ७४ ॥ अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै । रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम ॥ ७५ ॥ नाभा पृथिव्याः समिधाने अग्नौ रायस्पोषाय बृहते हवामहे । इरम्मदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥ ७६ ॥ याः सेना अभीत्वरीराव्याधिनीरुगणा उत । ये स्तेना ये च तस्करास्ताँस्ते अग्नेऽपि दधाम्यास्ये ॥ ७७ ॥ दꣳष्ट्राभ्यां मलिम्लून् जम्भ्यैस्तस्कराँ २॥ उत । हनुभ्याꣳ स्तेनान् भगवस्ताँस्त्वं खाद सुखादितान् ॥ ७८ ॥ ये जनेषु मलिम्लवस्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः ॥ ७९ ॥ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् धिप्साच्च सर्वं तं भस्मसा कुरु ॥ ८० ॥ सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥ ८१ ॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् । क्षिणोमि ब्रह्मणामि-

